*B*. परस्यैव अभिप्रायप्रदानमुखेन तमेवार्थं दूषयति—वक्रमिति। सर्वास्वाख्यायिकासु वक्त्रापरवक्त्रे नाम द्वे वृत्ते प्रयुक्ते दृष्टे। आश्वाससमये आश्वासः इति कविना प्रयुक्तं च दृष्टम्। एतदेव, आख्यायिकाकथयोः, आख्यायिकायाः चिह्नम् इति वदसि चेत्, नैवेत्याह—कथास्विति। कथास्वपि परिच्छेदस्थाने आश्वास इति कविभिः प्रयुक्तो दृष्टः; वक्त्रापरवक्त्रे च प्रसङ्गेन भवतः; तस्मात् एतानि आख्यायिकालक्षणानि न भवन्ति इत्यर्थः। उक्तमेव अर्थं निदर्शनेन साधयति—आर्यादिवदिति। कथासु आर्यादीनां प्रयोगो यथा दृश्यते तथा वक्त्रापरवक्त्रयोः प्रयोगे का हानिः स्यात्? एवं दूषिते परवादी आह—भेदश्च इत्यादि। लम्भः, पटलः, इत्यादि कथायां प्रयुक्तं दृष्टम्; आश्वासः, परिच्छेदः, इति च आख्यायिकायां प्रयुक्तो दृष्टः; तस्मात् भेदोऽस्ति इति परवादिकथां दूषयन् आह—आश्वासो वास्तु किं ततः इति। तेन किम् आयातम् इत्यर्थः। परिच्छेदसमये आश्वासः, पटलः, लम्भः, काण्डः, इति वा प्रयुक्ते कोऽपि अर्थभेदो न दृश्यते इति यावत्॥

**तत् कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता।**
**अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः॥**

२८॥

*A*. भेदनिराकरणम् उपसंहरति—तदिति। बहुनायक-

चरितरूपाः दशकुमारचरितवत् आख्यानशब्दवाच्याः प्रबन्धाः; तेषामपि कथायाम् अन्तर्भावः ॥

*B.* इत्युभयोः भेदाभावं प्रसाध्य, तमेवार्थं निगमरूपेण उपसंहराति —तदिति । यस्मात् उक्तप्रकारेण भेदप्रतिपत्तौ प्रमाणं नास्ति, तस्मात् कथा आख्यायिका इत्येका जातिः— एकजातिरित्यर्थः; संज्ञाभेद एव अस्तीति यावत्। आख्यानजातयः शकुन्तलोपाख्यानादयः अत्रैव कथायामेव अन्तर्भविष्यन्ति ॥

**कन्याहरणसङ्ग्रामविप्रलम्भोदयादयः ।**
**सर्गबन्धसमा एव नैते[1] वैशेषिका गुणाः॥ २९॥**

*A.* भामहेन 'कन्याहरणसङ्ग्रामविप्रलम्भोदयान्विता' इति आख्यायिकाविशेषणतया उक्तम् । आख्यायिकाभेद एव अत्र निराकृतः । एतान्यङ्गानि गद्यप्रबन्धस्यैव असाधारणानि न, किन्तु सर्गबन्धस्यापि साधारणानि इत्याह—कन्येति। नैते वैशेषिका गुणाः इत्यत्र गुणशब्दः अप्रधानवाचित्वेन अङ्गे एव लक्षणया प्रयुक्तः । एतानि अङ्गानि सर्गबन्धस्यापि साधारणानीति वदन्ति। नगरार्णवाद्यङ्गानि स्वभावाख्यानादयोऽलङ्काराश्च प्रबन्धमात्रसाधारणानि इति दर्शितम् ॥

*B.* एवम् एकजातित्वं प्रसाध्य, गद्यात्मककाव्यस्य लक्ष-

---

१. 'न ते' इति पा०।

णमाह—कन्येति । कन्याहरणादीनि लक्षणानि सर्गबन्धस्य उक्तानि ; तानि तेषामेव वैशेषिका गुणा न भवेयुः ; गद्या-कृतीनामपि समानानि इत्यर्थः ॥

**कविभावकृतं चिह्नमन्यत्रापि न दुष्यति ।**
**मुखमिष्टार्थसंसिद्धौ किं हि न स्यात् कृतात्मनाम् ॥**
**३० ॥**

*A*. कवीति । कविबुद्धिकल्पितम् अन्यदपि बन्धचिह्नं न दुष्यति; शोभावहमित्यर्थः । यथा—सर्गान्ते माघेन श्रीशब्दः, भारविणा लक्ष्मीशब्दः, प्रवरसेनेन च अंशान्ते अनुरागशब्दः, हस्तिमल्लेन च लम्भान्ते लम्भशब्दः, इत्यादि । तत्र हेतुम् आह—कृतात्मनां शिक्षितबुद्धीनाम् इष्टार्थसंसिद्धौ किं लोकरञ्जकं मुखम् उपायो न भवति ॥

*B*. उक्तलक्षणादन्यदपि कविभिरलंकाररूपेण ऊह्यते ; तदपि दोषाय न भवति इत्याह—कवीति । भावः अभिप्रायः ॥

**मिश्राणि नाटकादीनि तेषमान्यत्र विस्तरः ।**
**गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते[1] ॥३१॥**

---

१. 'पद्यगद्यमयी वाणी चम्पूरित्यपि विद्यते' इति पा० ।

*A.* मिश्रं दर्शयति । मिश्राणि गद्यपद्यमिश्राणि नाटकादीनि —"नाटकं सप्रकरणं भाणः प्रहसनं डिमः । व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश"—इति दश रूपकाणि । तेषाम् अन्यत्र भरते विस्तरः ; तल्लक्षणानि तत्रैव द्रष्टव्यानि इत्यर्थः । न केवलं नाटकादीन्येव मिश्रप्रबन्धाः, चम्पूसंज्ञकोऽपि कश्चिदस्तीत्याह— गद्यपद्यमयीति ॥

*B.* एवं गद्यपद्यलक्षणं प्रसाध्य, तयोः यानि लक्षणानि उक्तानि तान्येव मिश्रकाव्यस्य लक्षणानि भवेयुः इत्यमुमेवार्थं संहृत्य मिश्रस्य स्वरूपं दर्शयितुम् आह—मिश्राणीति । संस्कृत-पैशाचाद्यैः भषाविशेषैः गद्यपद्यैश्च ग्रथितानि यानि मिश्राणी-त्युच्यन्ते तानि नाटकादीनि । तेषां नाटकव्यायोगप्रकरणभाणा-दीनां विस्तरः शास्त्रान्तरे भरतादिभिः प्रणीते द्रष्टव्यः । इदानीं काव्यलक्षणस्य प्रस्तुतत्वात् नेह तेषां लक्षणमुच्यते । संस्कृतस्यैवापि गद्यपद्यमयतास्तीति आह—गद्यपद्येति ॥

**तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।**
**अपभ्रंशश्च मिश्रञ्चेत्याहुरार्याश्चतुर्विधम्[1] ॥३२॥**

*A.* भाषाभेदात् प्रबन्धचातुर्विध्यमाह—तदिति ॥

---

१. 'आप्ताः' इति पा० ।

*B*. ऐवं गद्यपद्यमिश्रवशेन काव्यनाटकादीनां त्रैविध्यं प्रसाध्य, इदानीं गद्यपद्यमिश्रात्मकानां काव्यादीनां समानरूपतया उपयुज्य-मानेषु भाषाविशेषेषु पूर्वाचार्यैः प्रदर्शितान् विशेषान् विस्तरेण अनुसन्धत्ते—तदिति । आप्ताः चतुर्विधमित्याहुः ॥

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः[1] ।**
**तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ॥२३॥**

*A*. तत्र संस्कृतस्य लक्षणमाह—संस्कृतमिति । दैवी देवैः व्याहृता, इहलोके महर्षिभिः अन्वाख्याता संस्कृतम् इति । महाराष्ट्रादिदेशभाषा प्राकृतम् ; प्रकृतेः संस्कृतात् आगतम् इति । तत्र त्रिविधम्—तद्भवं, तत्समं, देशी, इति । प्राकृतम् प्रकृति-प्रत्ययादिव्युत्पत्तिमत् संस्कृतम् ; ततः अगतम् इति वा प्राकृत-शब्दस्य व्युत्पत्तिः । अभ्युद्गमोत्पत्तिमत् देश्यम् ; तदपि प्राकृत-मिति व्यपदिश्यते । तत्र तद्भवं प्राकृतं यथा—णमह, आवडि-आ, इत्यादि । तत्समं संस्कृतसमं यथा—तलुनी, आसुरा, इत्यादि । देशी इति मागधी गृह्यते ॥

*B*. संस्कृतामिति । संस्कृतामिति अन्वाख्याता । इति-शब्दः प्रकारवाची । तद्भवं संस्कृतभवम्—छेत्तं, मज्झे, रुक्खो,

---

१. 'मनीषिभिः' इति पा० ।

इत्यादि । तत्समं तेन संस्कृतेन समम्—कीरः, अम्बा, गौः, इत्यादि । देशी—पोव्वळ्ळी इति क्रमुकनाम, चार्स्सिसी इति काञ्चनस्य नाम, दोग्घट इति गजस्य नाम । इत्यनेकप्रकारः प्राकृतविन्यासः ॥

**महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।**
**सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥ ३४ ॥**

*B*. तस्य विशेषान् दर्शयन् आह—महेति । यन्मयं यया निबद्धं सा महराष्ट्राश्रया ॥

**शौरसेनी च गौडी च लाटी[1] चान्या च तादृशी ।**
**याति प्राकृतमित्येवं[2] व्यवहारेषु सन्निधिम् ॥ ३५ ॥**

*B*. शौरसेनीति । अन्यापि तादृशी माळवादिदेशाश्रिता ॥

**आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।**
**शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ॥ ३६ ॥**

---

१. 'लाटी च गौडी' इति पा० । २. 'एवं' इति पा० ।

*A*. अपभ्रंशलक्षणमाह—आभीरेति। आभीरदेशो नाम आभीरप्रायः पश्चिमसमुद्रपार्श्ववर्तिजनपदः; तत्र प्रचुरा गीः आभीरभाषा। आदिशब्देन घूर्जरभाषा गृह्यते॥

*B*. आभीरेति। आभीरो नाम पश्चिमार्णवतीरे वर्तमानो देशविशेषः; अथवा आभीरादयः गोपालादयः। इति संस्कृतादीनां भेदप्रभेदाः॥

**संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत्।**
**ओसरादि[1]रपभ्रंशो नाटकादि तु मिश्रकम्॥३७॥**

*A*. भेदानां स्थानान्याह—संस्कृतमिति। सर्गबन्धो मुकुलकादिकाव्यं संस्कृतमयम्। स्कन्धकं नाम आर्यागीतिनिर्मितं काव्यम्; आदिशब्देन गीत्युपगीत्यादिनिर्मितं च गृह्यते; एतत् प्राकृतम्। ओसरादिः—ओसरः इति अपभ्रष्टभाषारचितः कश्चित् प्रबन्धः। नाटकादि तु रूपकदशकं तत्तत्पात्रानुरूपभाषामयम्॥

*B*. ग्रन्थरचनामुखेनापि तेषां भेदं दर्शयन् आह—संस्कृतमिति। सर्गबन्धादयः गद्यपद्यबन्धरूपाः। स्कन्धकं नाम जातिविशेषस्य संज्ञा; तदादि यत् तत् प्राकृतम्। अपभ्रंशभाषया

---

१. 'ओसरादीनि' इति पा०।

रचितस्य प्रबन्धस्य परिच्छेदः ओसरः इत्युच्यते ; तत् अपभ्रंशे एव प्रयोक्तव्यः। नाटकादि तु इत्यत्र तु-शब्दो विशेषवाची। अपि च नाटकप्रकरणादयो दशभेदाः ; ते तावत् भाषाभिः सर्वाभिः ग्रथितव्याः इत्यर्थः ॥

**कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते।**
**भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥ ३८ ॥**

*A.* कथेति। ईश्वरेण तया भूतभाषया देव्यै कथितः प्रबन्धो बृहत्कथा ॥

*B.* कथेति। भूताः इति प्रमथाः। अद्भुतार्थां विस्मयनीयां नरवाहनदत्तकथाप्रायाम् ॥

**लास्यच्छलिकशम्यादि प्रेक्षार्थमितरत्पुनः।**
**श्रव्यमेवेति सैवैषा द्वयी गतिरुदाहृता॥ ३९ ॥**

*A.* दृश्यश्रव्यभेदेन प्रबन्धद्वैविध्यमाह—लास्येति। लास्यच्छलिकशम्यादि दृश्यम्। तत्र शृङ्गारप्रधानं लास्यम्; वीरशृङ्गारप्रधानं छालिकम्; एतदेव किन्नरविषयं शम्या। तदादिनृत्तप्रबन्धः प्रेक्ष्यः ; इतरत् सर्गबन्धादि श्रव्यमेव ; इति द्विविधम्। नाटकादि तु दृश्यश्रव्यम् इति बोद्धव्यम् ॥

*B.* संस्कृतादिरूपेण चतुर्विधा गतिः प्रकारान्तरेण द्विधापि भवेत् इत्याह—लास्येति। चतुर्विधानां वाङ्मयानां लास्यच्छलिक-शम्यादि अभिनयरूपेण प्रवृत्तं यत् तत् प्रेक्षार्थम्; इतरत् सर्ग-बन्धादि श्रव्यम्। इति पुनः द्वयी गतिः। तत्र प्रेक्षार्थे—

'लास्यं शृङ्गारभूयिष्ठं नृत्तमीश्वरभाषितम्।
छलिकं छद्मना वृत्तं सूरयस्तद्विदो विदुः॥

शम्या तु सव्ययोः पातः सतालकरपादयोः।
उभयोः करयोः पातः सन्निपात इति स्मृतः॥'

मर्दलच्छलिकादिवाद्यविशेषाणाम् एकस्मिन् काले विरसण-प्रक्रमणं छलिकम् इत्युच्यते। अरत्निमात्रप्रायनानावर्णरचितयष्टि-हस्तैः बहुभिः—बह्वीभिर्वा—तैरेव तालहस्तैश्च तालयष्टीनाम् एकावसरे सन्निपातो वा, तालं विना यष्टिहस्तैरेव यष्टीनां सन्नि-पातो वा, शम्या इत्युच्यते॥

**अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ॥४०॥**

*A.* अथ सन्दर्भकाव्यगुणभेदेन द्वैविध्यं दर्शयितुम् उप-क्रमते—अस्तीति। 'वैदर्भी साथ पाञ्चाली गौडीयावन्तिका

तथा । लाटीया मागधी चेति षोढा रीतिर्हि गद्यते '—इति प्रसिद्धा रीतयः षट् । तत्र इतरा रीतयः चतस्रः परस्परं स्वल्पभेदाः ; वैदर्भगौडीयौ तु मार्गौ प्रस्फुटभेदौ मतौ । तौ वर्ण्येते लक्ष्यलक्षणैः प्रदर्श्येते ॥

*B*. सम्प्रति गद्यपद्यात्मकस्य संस्कृतस्यैव गौडवैदर्भानुसारेण विशेषं दर्शयितुमाह—अस्तीति । वैदर्भो नाम मध्यमदेशात् दक्षिणतो देशः ; तत्र भवा हि वैदर्भाः ; तेषाम् इयं रीतिः वैदर्भी । गौडो नाम मध्यमदेशात् पूर्वो जनपदः ; तस्मिन् जनपदे भवाः गौडीयाः । अत्र वैदर्भगौडीययोः मार्गद्वययोः भेदः कथ्यते ॥

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।**
**अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ ४१ ॥**

**इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।**
**एषां विपर्ययः प्रायो दृश्यते[1] गौडवर्त्मनि ॥४२॥**

*A*. मार्गभेदकरान् गुणान् उद्दिशति—श्लेषः इति द्वयेन । प्रायश्शब्दः अर्थव्यक्त्यौदार्यसमाध्यादयो गुणाः उभयसाधारणाः इति दर्शयति ॥

---

१. ' लक्ष्यते ' इति पा० ।

*B.* प्रतिज्ञातभेदकरान् गुणान् दर्शयितुमाह—श्लेष इति । एषां श्लेषादीनां विपर्ययः अन्यथात्वं गौडप्रस्थाने लक्ष्यते । प्रायोग्रहणं साकल्यनिवृत्त्यर्थम् । तेन अर्थव्यक्त्यौदार्यसमाधिगुणाः उभयमार्गतुल्याः इति गम्यते ॥

**श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।**
**शिथिलं मालतीमाला लोलालिकलिला यथा ॥ ४३ ॥**

**अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् ।**
**वैदर्भैर्मालतीदाम लङ्घितं भ्रमरैरिति ॥ ४४ ॥**

*A.* श्लेषं तद्विपर्ययं शैथिल्यं च लक्षयति—श्लिष्टमिति । श्लिष्टं श्लेषगुणयुक्तं; वाक्यम् इति शेषः । अल्पप्राणाक्षरोत्तरम्—अल्पप्राणाक्षरमयमेव यद्वाक्यं—तत् शिथिलम् । तथा च वक्ष्यति—'बन्धशैथिल्यदोषो हि दर्शितः सर्वकोमलैः'—इति । तद्विपरीतं श्लिष्टम् । शैथिल्यश्लेषयोः उदाहरणे मार्गभेदेन दर्शयति—मालतीमालेति मालतीदामेति च ॥

*B.* उक्तान् गुणान् अत्र सोदाहरणं क्रमेण अनुसन्धत्ते—श्लिष्टमिति । श्लेष एव श्लिष्टम् इत्युच्यते; अत्र भावे क्तः । अस्पृष्टशैथिल्यम्—वर्णानां गुम्फनसमये यत् शिथिलत्वेन न प्रतिभाति

तत् अस्पृष्टशैथिल्यम्। तदपि महाप्राणवद्भिः अक्षरैः भवितव्यम् ; तदन्यत् शिथिलम् अल्पप्राणाक्षरभूयिष्ठम् अन्तस्स्थाभिः वर्गाणां प्रथमतृतीयपञ्चमाक्षरैश्च भवितव्यम् । क्रमोल्लङ्घनेन शिथिलस्य उदाहरणम् आह—मालतीमालेति । यत् शिथिलस्य उदाहरण-सूचनं तदेतत् शिथिलमपि अनुप्रासबुद्ध्या गौडैः इह स्वीकृतम इत्याह—अनुप्रासेति। शिथिलमपि तत् पूर्वोक्तम् अनुप्रासबुद्ध्या गौडैः स्वीकृतम् । वैदर्भैस्तु रचनादार्ढ्यात् श्लेषः स्वीकृतः—मालतीदाम लङ्घितं भ्रमरैः इति । लङ्घितम् आक्रान्तम् ; इति-शब्दः उदाहरणे ॥

**प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।**
**लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥४५॥**

*A.* प्रसादं लक्ष्यलक्षणाभ्यां दर्शयति—प्रसादवदिति ॥

*B.* प्रसादस्य उदाहरणम् आह—प्रसादवदिति ।

**व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते ।**
**यथानत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥ ४६ ॥**[1]

---

१. 'अनत्यर्जुन' इति पा॰ ।

*A*. प्रसादविपर्ययं गौडेष्टं दर्शयति—व्युत्पन्नमिति ॥

*B*. अप्रसादस्य उदाहरणं दर्शयन् आह—व्युत्पन्नमिति । गौडीयैः पौरस्त्यैः नातिरूढमपि अतिप्रगल्भमपि ईहितं दृश्यते । कुतः? व्युत्पन्नम् इति । तैः एवं स्वीकृतम् इत्याह—यथेति । अनभ्यर्जुनाब्जन्म नीलोत्पलम् ; वलक्षगुः श्वेतभानुः ॥

**समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।**

**बन्धे मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः॥ ४७ ॥**

*A*. समतां लक्षयति—सममिति । बन्धाः शब्दसन्दर्भाः त्रिविधाः—मृदुवर्णजनितो बन्धः, अमृदुस्फुटवर्णजानितो बन्धः, मृदुस्फुटमिश्रवर्णजनितो बन्धश्चेति। मिश्रवर्णजानितो बन्धो मध्यमः। तेषु बन्धेषु एकैकस्मिन् अविषमत्वम् एकरूपत्वं समत्वम् ॥

*B*. समोदाहरणं सममिति । समं बन्धेषु समत्वेन स्वीकृतम् ; अविषमम् इति यावत् । ते हि बन्धाः मृदुस्फुटमिश्रत्वात् त्रिविधा भवन्ति । मृद्वक्षरैः अल्पप्राणाक्षरैः ग्रथिताः मृदवः । नमृदुस्फुटाक्षरैः घोषवद्भिः ग्रथिताः स्फुटाः । मिश्राक्षरैः ग्रथिताः समाः। एषु मृदुस्फुटौ गौडीयैः स्वीकृतौ । मध्यमस्तु अविषमः इति वैदर्भैः स्वीकृतः ॥

कोकिलालापवाचालो मामेति मलयानिलः ।
उच्चलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥४८॥

चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।
स्पर्धते रुद्धमद्धैर्यो वररामाननानिलैः ॥ ४९ ॥

इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरम् ।
अवेक्षमाणा ववृते पौरस्त्या काव्यपद्धतिः ॥५०॥

*A.* त्रयाणां बन्धानां त्रिभिः अर्धैः उदाहरणानि आह—कोकिलेति । अत्रबन्धेषु मध्यमबन्धसत्त्वं वैदर्भेष्टम् । मृदुबन्धे विशेषाभावात्, स्फुटबन्धे सौकुमार्याभावाच्च, तौ न वैदर्भाभिमतौ इति बोद्धव्यम् । समताविपर्ययं वैषम्यं दर्शयाति—स्पर्धत इति । समताविपर्ययस्य गौडेष्टत्वं दर्शयाति—इतीति । उपमारूपः अर्थालङ्कारः स्फुटवर्णानुप्रासश्च विषमपरिग्रहहेतुः ॥

*B.* मृदूदाहरणं कोकिलेत्यादि । स्फुटोदाहरणम् उच्चलदिति । मिश्रोदाहरणं चन्दनेत्यादि । उक्तं निगमयाति—इतीति । इति

---

१. 'उच्चरत्' इति पा० । २. 'मुख' इति पा० । ३. 'अपेक्षमाणा' इति पा० । ४. 'ववृधे' इति पा० ।

वैषम्यम् अनालोच्य, अर्थालङ्कारयोः डम्बरम् अतिसुभगताम् आलोक्य च, गौडानां काव्यपद्धतिः वर्तते प्रवृत्ता ॥

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।**
**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥५१॥**

*A.* मधुरं लक्षयति—मधुरमिति । शब्दाश्रयम् अर्थाश्रयं च विबुधमनोरञ्जनं माधुर्यं द्विविधम् ॥

*B.* माधुर्यमाह—मधुरमिति । वाचि शब्दे रससमुपेते वस्तुनि अर्थे च रसस्थितिः यस्य तत् मधुरं नाम ॥

**यया कया चित् श्रुत्या यत् समानमनुभूयते ।**
**तद्रूपादिपदासक्तिः[1] सानुप्रासा रसावहा ॥ ५२ ॥**

*A.* तत्र शब्दमाधुर्यं लक्षयति—ययेति । यया कयापि श्रुत्या, कण्ठाद्येकस्थानजननप्रयुक्तेन स्पृष्टतादिप्रयत्नजन्येन वा एकेन ध्वनिविशेषेण यच्च रूपं समानम् अनुभूयते, तस्य शब्दरूपस्य, तद्रूपादिपदासक्तिः—तद्रूपेण तच्छ्रुतिमता आदिपदेन पूर्वानुभूतेन पदेन शब्देन सह, या आसक्तिः सा रसावहा; स्थानादिजन्यैकश्रु-

---

१. 'तद्रूपा हि पदासत्तिः' इति पा० ।

तिमतोः पदयोः वर्णयोर्वा स्थितिरपि प्रकृष्टा श्रुतिसाम्यनामरसावहेत्यर्थः । सानुप्रासा—अनुप्रासश्च रसावहः इति यावत् । एवं द्विविधं शब्दमाधुर्यम् ॥

*B.* माधुर्यस्वरूपं प्रदर्श्य प्रथमं शब्देन इदं दर्शयितुमाह—यथेति । तद्रूपं तथाविधं रूपम् आदिः यस्य तस्य आसक्तिः या सा सानुप्रासा । शब्देन रसावहा सा भवति ॥

**एष राजा यदा लक्ष्मीं[1] प्राप्तवान् ब्राह्मणप्रियः ।**

**तदा[2] प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत्[3] ॥ ५३ ॥**

*A.* तत्र श्रुतिसाम्यस्य उदाहरणमाह—एष इति । षरयोः मूर्धन्यत्वात् श्रुतिसाम्यम्; जायेति तालव्यत्वात्, दालेति दन्त्यत्वात्, पबयोरोष्ठ्यत्वात्, तदेति तिधेति च दन्त्यत्वात् ॥

*B.* प्राप्त-ब्राह्मण-प्रभृतीनां रेफः पृथक्प्रयुक्तराजेतिरेफपदस्य आदिभूतत्वात् समानम् अनुभूयते ॥

**इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः ।**

**अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम्[4] ॥ ५४ ॥**

---

१. 'राज्यम्' इति पा० । २. 'ततः' इति पा० । ३. 'उद्भवः' इति पा० । ४. 'आदृतम्' इति पा० ।

*A*. श्रुतिसाम्यवर्णानुप्रासौ वैदर्भगौडयोः विभाजितौ इत्याह—इतीति ॥

*B*. उक्तः प्रकारो वैदर्भैः स्वीकृतः, न तावत् गौडैः इत्याह—इतीति। इदम् इत्युक्तप्रकारानुप्रासः गौडैः न आदृतम्। तेषां गौडानाम् अन्योऽनुप्रासः अतीव हि प्रियो भवति। वैदर्भैः अनुप्रासादपि इदमेव सुतरां स्वीकृतं भवाति इत्यर्थः ॥

**वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।**
**पूर्वानुभवसंस्कारबोधिनी यद्यदूरता ॥ ५५ ॥**

*A*. अनुप्रासं लक्षयति—वर्णेति। पादेषु—पादादिषु पदेषु, पदेषु—पदादिषु, इत्यर्थः ॥

*B*. गौडप्रियस्य अनुप्रासस्य लक्षणं दर्शयितुमाह—वर्णावृत्तिरिति। पादेषु पदेषु च बहुशो वर्णानाम् आवृत्तिः यदि क्रियते, तदा तत्र अनुप्रासः स्यात्। आवृत्तेः, पूर्वमुच्चारितस्यैव वर्णस्य पुनरुच्चारणे क्रियमाणे, पूर्वानुभूतसंस्कारबोधिनी अदूरता अस्ति चेत्, तदैव तत्र अनुप्रासो भवाति ॥

**चन्द्रे शरन्निशोत्तंसे कुन्दस्तबकविभ्रमे[1] ।**

---

१. 'सन्निभे' इति पा० ।

**इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम् ॥**
**५६ ॥**

*A*. तत्र पादानुप्रासं दर्शयति—चन्द्र इति ॥

*B*. पादानुप्रासोदाहरणमाह—चन्द्र इति। अत्र चतुर्षु पादेषु चन्द्र कुन्द इन्द्र सन्द इति क्रमेण नकारदकारौ अनुसृतौ भवतः। चन्द्र इन्द्र, कुन्द सन्द, इति केचित् आवृत्तिं पश्यन्ति ॥

**चारु चान्द्रमसं भीरु बिम्बं पश्यैतदम्बरे।**
**मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम्[1]॥ ५७ ॥**

*A*. अथ पदानुप्रासं दर्शयति—चार्विति।

*B*. पदानुप्रासं दर्शयति—चार्विति। चकारद्वयं बकारद्वयं मकारद्वयं नकारद्वयं च पदे सन्निकृष्टानुप्रासत्वेन स्वीकृतं भवति। उद्यतम् उदितम् ॥

**इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम्[2]।**
**न तु रामामुखाम्भोजसदृशश्चन्द्रमा इति॥ ५८ ॥**

*A*. 'पूर्वानुभूतसंस्कारबोधिनी यद्यदूरता' इत्यस्य व्यावृत्तिं दर्शयति—इतीति ॥

---

१. 'कर्तुं' इति पा०। २. 'स्थितिम्' इति पा०।

*B.* इतीति । नातिदूरान्तरस्थितिम् इति दूरान्तरस्थितिराहितम् अनुप्रासम् इच्छन्ति ; रामामुखेत्याद्युदाहरणे दूरान्तरस्थितिमतीं मा इत्यस्यावृत्तिम् अनुप्रासत्वेन नाङ्गीकुर्वन्ति ॥

**स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः ।**
**च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः॥ ५९ ॥**

**इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति ।**
**अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ६० ॥**

*A.* बन्धपारुष्यशैथिल्यावहस्य अनुप्रासस्य न वैदर्भेष्टत्वमित्याह—स्मर इति द्वयेन । 'इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः । अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम्'—इत्यत्र प्रायश्शब्देन उभयोः श्रुतिसाम्यानुप्रासयोः वैदर्भगौडयोरिष्टतरत्वमुक्तम् ; न तु अनिष्टत्वम् , बन्धपारुष्यशैथिल्यावहस्य अनुप्रासविशेषस्य वैदर्भानिष्टत्वकथनात् ; इत्यवगन्तव्यम् ॥

**आवृत्तिमेवं सङ्घातगोचरां यमकं विदुः ।**
**तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते ॥ ६१ ॥**

---

१. 'आवृत्तिं वर्ण' इति पा० ।

*A*. आवृत्तिमिति । एकवर्णावृत्तिवत् अनेकवर्णावृत्तिरूपं यत् यमकं दर्शयितव्यं, तत्तु कोमलबुद्धीनामनन्तरावहं विस्तीर्णं च । अतः तृतीये परिच्छेदे दर्शयिष्यते ॥

*B*. स्मर इत्यादिना निर्दिष्टवर्णावृत्तिप्रसङ्गेन यमकं प्रस्तुतम् ; तत् पश्चात् विधास्यते इत्याह । सङ्घातगोचरां वर्णानां पदानां च समूहविषयभूताम् । तत् यमकं मधुररसेनैव न समुपेतम्, इत्यतो हेतोः पश्चात् विधास्यते वक्ष्यते ॥

**कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चतु[1] ।**
**तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥ ६२ ॥**

*A*. अर्थमाधुर्यमग्राम्यतारूपं दर्शयिष्यति प्रशंसति च—कामिति । उपमोत्प्रेक्षादिः अलङ्कारः सर्वोऽपि अर्थे रसं निषिञ्चतु । तथापि एनम् अर्थरसातिशयम् अग्राम्यतैव भूयसा वहति । सहृदयोद्वेगकरं ग्राम्यं, तद्विपरीतम् अग्राम्यम् । तेन सहृदयसन्तोषकरम् अग्राम्यम् इत्यर्थः ॥

*B*. पूर्वं मधुरगुणलक्षणारम्भे अर्थेऽपि रसवत्ता अस्तीत्युक्तम् ; साद्य दर्श्यते—काममिति । सर्वोऽपि अलङ्कारः अर्थे रसं कामं निषिञ्चतु ददातु । तथापि इयम् अग्राम्यतैव अनश्लीलतैव एनं

---

१. 'निषिञ्चति' इति पा० ।

माधुर्यस्य भारं भूयसा अत्यर्थं वहति । ग्राम्यार्थः प्रतिपाद्यते चेत्, स दुष्ट एव भवति ॥

**कन्ये कामयमानं मां न त्वं[1] कामयसे कथम् ।**
**इति ग्राम्योऽयमर्थात्मा वैरस्यायैव[2] कल्पते ॥६३॥**

*A*. अग्राम्यं दर्शयितुं प्रथमं ग्राम्यं दर्शयति—कन्ये इति ॥
*B*. ग्राम्योदाहरणमाह—कन्ये इति ॥

**कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः ।**
**त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६४ ॥**

*A*. अग्राम्यं दर्शयति—काममिति ॥

*B*. अग्राम्यस्य उदाहरणमाह—काममिति ॥

**शब्देऽपि ग्राम्यतास्त्येव सा सभ्येतरकीर्तनात् ।**
**यथा यकारादिपदं रत्युत्सवनिरूपणे ॥ ६५ ॥**

*A*. ग्राम्यता नाम दोषो न केवलम् अर्थ एव दृश्यते, शब्देऽपि

---

१. 'त्वं न' इति पा० । २. 'वैरस्याय प्रकल्पते' इति पा० ।

अस्तीत्याह—शब्देऽपीति । यथा—यकारादिपदं रतिशब्दार्थ-वाचकम् ; यभशब्दः स्वरूपणैव सभ्येतरः इत्यर्थः ॥

*B*. प्रसङ्गागतां ग्राम्यतां शब्देऽपि दर्शयितुमाह—शब्देऽपि इति । यथा इति उदाहरणदर्शने । यकारादिपदं यभ मैथुने इत्य-स्मात् यभ याभ इत्येवमादि ॥

**पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः ।**
**दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥६६॥**

**खरं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति ।**
**एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥ ६७ ॥**

*A*. पदसन्धिना वाक्यार्थान्तरप्रतीतिकरत्वेन च पुनर्द्वि-विधं शब्दग्राम्यं दर्शयति—पदेति । यच्छब्दभवच्छब्दौ सन्धिना श्लिष्टौ याभवच्छब्दप्रतीतिकरौ ग्राम्यौ । वीर्यवान् रामः खरं राक्षसं प्रहृत्य हत्वा विश्रान्तः इति वाक्यं, कश्चित् पुरुषः रतौ खरं प्रचण्डं प्रहृत्य वीर्यवान् विश्रान्तः इति, वाक्यार्थान्तरप्रतीति-करत्वात् ग्राम्यम् । 'कन्ये कामयमानं माम्'—इत्यत्र वाक्यार्थ एव ग्राम्यत्वमित्यर्थग्राम्यत्वम् ; अत्र तु उदाहरणे ग्राम्यवाक्यार्थो-न्तरप्रतीतिकृत् वाक्यमिति शब्दग्राम्यत्वम् । अर्थग्राम्यत्वशब्द-

ग्राम्यत्वे गौडवैदर्भयोः उभयोरपि मार्गयोः परित्याज्ये इत्याह—एवमादीति ॥

*B.* अत्र तस्या एव ग्राम्यतायाः प्रकारविशेषमाह—पदेति। पदानां सन्धिः पदसन्धानम्। तस्य वृत्तिः। तया वा वाक्यार्थत्वेन वा दुष्प्रतीतिकरं यत् तदपि ग्राम्यमेव। यथा—या भवतः प्रिया इत्युक्ते, या अङ्गना भवतः प्रिया इति गम्यमेव; अत्र याभवतः पुरुषस्य प्रिया इति च गम्यते। श्रोतुर्हि अन्तःपदसन्धानप्रतीत्या दुष्प्रतीतिकरम् एतत्। वीर्यवान् पुरुषः कोऽपि खरं तीक्ष्णं प्रहृत्य, प्रहारं कृत्वा, युद्धान्ते विश्रान्तो भवति इत्युक्ते, श्रोतुः कापि दुष्टा वाक्यार्थप्रतीतिः जायते ॥

**भगिनीभगवत्यादि सर्वत्रैवानुमन्यते।**
**विभक्तमिति माधुर्यमुच्यते सुकुमारता॥ ६८॥**

*A.* भगिनीति। भगिनीभगवत्यादिपदं ग्राम्यार्थान्तरप्रतीतिकरमपि सर्वत्रैव लोकवेदयोः दृष्टप्रयोगत्वात् न दुष्टम्। विस्तरेणोक्तं माधुर्यम् उपसंहृत्य सौकुमार्यं लिलक्षयिषति ॥

*B.* भगिनीति। सर्वत्र वैदर्भगौडयोः। अथ सुकुमारम् उच्यते ॥

**अनिष्ठुराक्षरप्रायं सुकुमारमिहोच्यते[1]।**

---

१. 'इष्यते' इति पा०।

बन्धशैथिल्यदोषोऽपि[1] दर्शितः सर्वकोमले[2] ॥ ६९ ॥

*A.* तल्लक्षयति—अनिष्ठुरेति । अनिष्ठुराक्षरप्रायं मृद्वक्षरबहुलं निष्ठुराक्षरामिश्रं सुकुमारम् ॥

*B.* तस्य लक्षणमाह—अनिष्ठुरेति । निष्ठुराः किल क्षकारादयः ; तदन्यत् अनिष्ठुरम् । तदव्यमिश्रमिह वैदर्भमात्रे सुकुमारमित्युच्यते । सर्वकोमलेषु अक्षरेषु बन्धशैथिल्यदोषो दर्शितः ॥

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ ७० ॥

*A.* सौकुमार्यम् उदाहरति—मण्डलीकृत्येति ॥

*B.* उदाहरणमाह—मण्डलीकृत्येति । मधुरगीतिभिः कण्ठैः उपलक्षिताः ॥

इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः ।
सुकुमारतयैवैतदारोहति सतां मनः[3] ॥ ७१ ॥

---

१. 'दोषस्तु' इति पा० । २. 'कोमलैः' इति पा० । ३. 'मुखम्' इति पा० ।

*A*. सौकुमार्यं प्रशंसति—इतीति । तदर्थः अपूर्वार्थो रसवदर्थो वा न इति अनूर्जितः । तादृशः सुप्रसिद्धः शोभाकरो वा अलङ्कारः उत्प्रेक्षादिश्च नास्ति ॥

*B*. सुकुमारप्रशंसारूपेण निगमयति—इतीति । अनूर्जितः अतेजिष्ठः । अलङ्कारश्च न सुन्दरः ॥

**दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते ।**
**न्यक्षेण क्षपितः[1] पक्षः[2] क्षत्रियाणां क्षणादिति॥७२॥**

*A*. सौकुमार्यविपर्ययं दीप्तमिति नाम्ना अपरे गौडाः स्वीकुर्वते इत्याह—दीप्तमिति । कृच्छ्रोद्यं, कृच्छ्रेण उच्चार्यं, श्रमेण पठनीयम् । न्यक्षेण कार्त्स्न्येन ; 'न्यक्षं कार्त्स्न्ये निकृष्टे च' इति वैजयन्ती ॥

*B*. सुकुमारस्य प्रत्युदहारणमाह—दीप्तमिति । अपरैः गौडैः । न्यक्षेण साकल्येन ॥

**अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।**
**भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ॥ ७३ ॥**

*A*, अर्थव्यक्तिं लक्षयति—अर्थव्यक्तिरिति । अनेयत्वम्

---

१. 'क्षयितः' इति पा० । २. 'पक्षः क्षपितः' इति पा० ।

उपात्तेनैव शब्देन वाक्यार्थप्रतीतिः। अर्थव्यक्तिम् उदाहरति—हरिणेति ॥

*B.* अर्थव्यक्तिरिति। उक्तेनैव शब्देन विवक्षितार्थसिद्धिः अर्थव्यक्तिः। अनेयत्वं नाम वाक्ये शब्दान्तरस्य अध्याहारानाकाङ्क्षा। अनेयत्वस्य उदाहरणमाह—हरिणेति। अत्र अर्थस्य शब्दान्तरनिरपेक्षता व्यक्ता ॥

**मही महावराहेण लोहितादुद्धृतोदधेः।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ॥ ७४ ॥**

*A.* अनेयार्थप्रतीत्यर्थं नेयार्थं दर्शयति—महीति।

*B.* शब्दान्तरसापेक्षत्वस्य उदाहरणं दर्शयति—महीति। अत्र तु लोहितसमुद्रस्य असम्भवात्, केन स लोहितः इति अपेक्षायाम्, उरगरुधिरस्य नेयत्वात्, अध्याहार्योदाहरणमेतत् ॥

**नेदृशं बहुमन्यन्ते मार्गयोरुभयोरपि।**
**न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥**
**७५ ॥**

*A.* अर्थव्यक्तिः मार्गद्वयसाधारणी इत्याह—नेति। अत्र हेतुमाह—नहीति। आकाङ्क्षासन्निधियोग्यतावशेन पदैः प्रयुक्तैरेव

अभिहितानां वाक्यार्थानां प्रतीतिं हित्वा अन्याभिधेयवत्त्वस्याभावः शब्दन्यायः ॥

*B.* नेति । शब्दन्यायविलङ्घिनी या सा प्रतीतिः सुभगा न ॥ यावदर्थोऽभिमतः तावच्छब्देन भवितव्यम्; शब्दस्यापि यावदर्थ-प्रतिपादनशक्तिः तावदर्थेन भवितव्यम्; इति शब्दशास्त्रन्यायः ॥

**उत्कर्षवान् गुणः कश्चिद्यस्मिन्नुक्ते[1] प्रतीयते ।**
**तदुदाराह्वयं तेन सनाथा सर्व[2]पद्धतिः ॥ ७६ ॥**

A. औदार्यं लक्षयति—उत्कर्षवानिति ॥

*B.* उदारगुणं दर्शयति—उत्कर्षवानिति । सर्वपद्धतिः गौडवैदर्भयोः पद्धतिः, सर्वकाव्यनाटकादिपद्धतयो वा ॥

**अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् ।**
**तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ७७ ॥**
**इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते ।**
**अनेनैव पथान्यच्च समानन्यायमूह्यताम् ॥ ७८ ॥**

---

१. 'उक्ते यस्मिन्' इति पा० । २. 'काव्य' इति पा० ।

*A*. तदुदाहरति—अर्थिनामिति । तदवस्था कृपणावस्था । त्यागोत्कर्षवत्, शौर्यादिगुणोत्कर्षलक्षकवाक्यम् ऊह्यम् ॥

*B*. अर्थिनामिति । तदवस्था कृपणा । अन्यच्च शौर्याद्यपि ॥

**श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।**

**यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः ॥ ७९ ॥**

*A*. औदार्यं प्रकारान्तरेण लक्षयति—श्लाघ्यैरिति । वस्तुवैशिष्ट्यप्रतीतिकृद्विशेषणं दर्शयति—यथेति । कैश्चिदिति उभयविधः उदारार्थः प्रदर्श्यते ॥

*B*. श्लाघ्यैरिति । कैश्चित् आचार्यैः ॥

**ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् ।**

**पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥ ८० ॥**

**तद्गुरूणां लघूनां च बाहुल्याल्पत्वमिश्रणैः ।**

**उच्चावचप्रकारं तद्दृश्यमाख्यायिकादिषु ॥ ८१ ॥**

*A*. मार्गद्वयसाधारणम् ओजो लक्षयति—ओज इति द्वयेन ।

---

१. 'सद्' इति पा० ।

तत् ओजः—गुरुबहुलं लघुबहुलम् उत्कलिकाप्रायं पद्यगन्धि इति—बहुप्रकारम् । गुरुबहुलं यथा—' नाकनायकनिकायकामिनी' इति । लघुबहुलं यथा—' अवनिपवनवनगगनदहनतपनतुहिनकिरणयजमानमयीः' इति । मिश्रं यथा—' त्वङ्गत्तुङ्गतरङ्गदलिततारकम् ' इति ॥

*B.* ओज इति । गद्यस्य जीवितं प्रधानभूतम् ; एतद्दाक्षिणात्यानाम् । पद्येऽपि गद्येऽपि गौडानाम् इदम् एकं परायणम् प्रधानगतिः इत्यर्थः । अथ ओजोगुणस्य वृत्तिप्रकारं दर्शयति—तदिति । तत् ओजोगुणसमवेतं, गुरूणां लघूनां च परस्परबाहुल्यात्, अल्पतया च, मिश्रणैश्च समेत्य, उच्चावचप्रकारं नैकभेदम् । तत् आख्यायिकादिषु द्रष्टव्यम् ॥

**अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा ।**
**पीनस्तनस्थितातांम्रवस्त्रेवाभाति वारुणी ॥८२॥**

*A.* क्रमेण उदाहरति—अस्तेति । अस्तमस्तकम् अस्ताचलशिखरम् । वारुणी पश्चिमा दिक् ॥

**इति पद्येऽपि पौरस्त्याः बध्नन्त्योजस्विनीर्गिरः ।**

---

१. ' आतम्रकम्रवस्त्रेव ' इति पा० ।

अन्येऽप्यनाकुलं[1] हृद्यमिच्छन्त्योजो गिरां यथा ॥ ८३ ॥

पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका ।
कस्य कामातुरं चेतो वारुणी न करिष्यति ॥८४॥

*A*. अयं गुणः गौडानाम् अभिमततमः, दाक्षिणात्याः केचित् केचित् तमङ्गीकुर्वते इत्याह—इतीति । अन्येऽपीति—अनाकुलम् अनुद्भटपदम् । तदुदाहरति—पयोधरेति ॥

*B*. गद्ये एव ईदृश्यः पर्याकुलाः ओजस्विन्यो द्रष्टव्या गिरः। पद्येऽपि ताः पौरस्त्यैः ग्रथ्यन्ते इत्याह—इतीति । वैदर्भास्तु न ईदृशीः अङ्गीकुर्वन्ति इत्याह । अनाकुलम् आकुलताशून्यं, तेन हृद्यं हृदय-हारि इच्छन्ति । उदाहरति—पयोधरेति ॥

कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।
तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते ॥८५॥

*A*. कान्तलक्षणमाह—कान्तमिति । लौकिकार्थानतिक्रमात् लोकानुभवसंवादात् इति यावत् ॥

---

१. 'त्वनाकुलं' इति पा० ।

*B*. वैदर्भाणां कान्तस्वरूपमाह—कान्तमिति । कान्तं नाम सर्वजगत्कमनीयकम् । तच्च लौकिकार्थानतिक्रमात् लौकिकार्थानुल्लङ्घनेन भवितव्यम् । तत् कान्तं वार्ताभिधानेषु वर्णनासु च विद्यते । वार्ता नाम अन्योन्यकथनम् । वर्णना नाम प्रशंसावचनम् ॥

**गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।**
**सम्भावयति यान्येवं पावनैः पादपांसुभिः ॥८६॥**

**अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।**
**अवकाशो न पर्याप्तस्तव बाहुलतान्तरे[1] ॥ ८७ ॥**

*A*. कान्तं वार्ताभिधाने वर्णनायां च क्रमेण उदाहरति—गृहाणीतिद्वयेन ॥

*B*. वार्ताभिधानोदाहरणम्—गृहाणीति। वर्णनोदाहरणम्—अनयोरिति । अवकाशो न पर्याप्तः, न परिपूर्णः । बाहुलतान्तरं बाहुलतयोः मध्यम् ॥

---

१' 'लतान्तरम्' इति पा० ।

लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः ।
योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः ॥
८८ ॥

*A.* कान्तिविपर्ययं अत्युक्तिनामगुणं गौडाभिमतं लक्षयति—लोकेति ॥

*B.* अंशम् अतिक्रान्त इव लोकयात्राम्, असन्नपि यः परमार्थतया वक्तुमिष्टः, तेन अर्थेन पौरस्त्याः तुष्यन्ति, न तु वैदर्भाः इत्याह—लोकेति । विदग्धाः पण्डिताः, तुष्टा भवन्ति, अत्युक्तेरभीष्टत्वात् तेषाम् । विदग्धाः इति गौडान् आक्षिपति ॥

देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम् ।
युष्मत्पादरजःपातधौतनिश्शेषकल्मषम्[2] ॥ ८९ ॥

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥९०॥

*A.* शब्द इव अर्थे तत् उदाहरति—देवेतिद्वयेन ॥

१. 'यथा' इति पा० । २. 'किल्बिषम्' इति पा० ।

*B*. देवेति । देवधिष्ण्यं देवालयः; कल्मषं पापम् । इदमपि वार्तोदाहरणम्; अल्पमित्येतत् वर्णनोदाहरणम् । भवत्याः इदं स्तनजृम्भणम् एवं भावि इति अनालोच्यैव वेधसा आकाशम् अवकाशम् अल्पं निर्मितम् ॥

**इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।**
**कान्तं भवति सर्वस्य लोकयात्रानुवर्तिनः ॥९१॥**

*A*. अनयोः उदाहरणयोः कान्तिमत्त्वम् उपपादयति—इतीति । ऋषिकल्पविशिष्टशापानुग्रहक्षमपुरुषोपश्लाघने परिणद्धोद्भिद्यमानस्तनकन्याविषयेऽपि कथ्यमानम् एतत् कान्तं भवति ॥

*B*. वार्तावर्णनयोः एवम्भूतं वाक्यं सम्भवति, लोकयात्रानुवर्तिनां कान्तमपि सम्भवति इत्याह—इतीति । एतत् उक्तप्रकारं, विशेषवचसा संस्कृतं, पूज्यमेव लोकयात्रानुवर्तनशीलस्य ॥

**इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम् ।**
**प्रस्थानं प्राक् प्रणीतं तु सारमन्यस्य वर्त्मनः ॥**
**९२ ॥**

*B*. इदमिति । अन्यस्य वर्त्मनो वैदर्भस्य सारं—गृहाणि नाम तान्येवेत्यादिश्लोकद्वयं पूर्वोक्तम् ॥

अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥ ९३ ॥

कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च ।
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥ ९४ ॥

*A.* समाधिं लक्षयति—अन्येति । अन्यस्य धर्मः अन्यधर्मः । ततोऽन्यत्र तस्माद्धर्मिणः अन्यस्मिन् धर्मिणि । लोकसीमानुरोधिना अर्थसादृश्यानुरोधिना । सम्यक् युक्तम् आधीयते यत्र तत्र स्यात् समाधिः । समाधिम् उदाहरति—कुमुदानीति । कुमुदेषु कमलेषु च, सङ्कोचविकासयोः सादृश्यात्, निमीलनोन्मेषौ अध्यस्य, निमीलन्ति उन्मिषन्ति इति शब्दौ प्रयुक्तौ ॥

*B.* अन्येति । यत्र यो धर्मः तस्मादन्यत्र स समाधीयते इति समाधिः स्मृतः । उदाहरणम्—कुमुदानीति । कुमुदादिषु लोचनक्रियारोपात् तेष्वपि लोचनक्रियावाची शब्दो लब्धः ॥

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयात्[1] ।
अतिसुन्दरमन्यत्र[2] ग्राम्यकक्ष्यां विगाहते ॥९५॥

---

१. 'व्यपाश्रयम्' इति पा० । २. 'अन्यत्तु' इति पा० ।

*A*. केचित् धर्माः मुख्यधर्मिणः अन्यस्मिन् धर्मिणि आधीयमानाः शोभन्ते, न तु मुख्यधर्मिणि, इत्याह—निष्ठ्यूतेति ॥

*B*. समाधिविषये एव श्लाघ्यानि, पक्षान्तरे ग्राम्याणि, पदानि आह—निष्ठ्यूतेति । निष्ठ्यूतं लालाजलत्यागः; उद्गिरणं नाम जलादेः यथेष्टत्यागः; वमनं नाम पूर्वमेव वर्तमानस्य द्रव्यस्य बलात् निष्क्रमणम् । आदिशब्दात् उच्चारादयो गृह्यन्ते । ग्राम्यकक्ष्यां विगाहते हेयकल्पं भवति ॥

**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।**
**भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ९६ ॥**

**इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति ।**
**युगपन्नैकधर्माणामध्यासश्च स्मृतो[1] यथा ॥ ९७ ॥**

*A*. तत् उदाहरति—पद्मानीति । पद्मेषु अर्कांशुषु च निष्ठीवनवमनोद्गिरणशब्दाः प्रयुक्ताः शोभन्ते । अपितु निष्ठीवति वधूः, वमति, उद्गिरति वा, इति अहृद्यम् । एकस्मिन् धर्मिणि अनेकधर्माध्यासं केचित् प्रतिषेधन्ति; तान् प्रतिषेधति—युगपदिति ॥

*B*. उदाहरणम्—पद्मानीति । उद्गीर्णारुणरेणुभिः मुखैः

---

1. ‘ मतो ’इति पा० ।

वमन्तीव । उक्तस्य शोभनतां विपर्यासे अशोभनतां च प्रकाश्य अनेकधर्माणामपि एकस्मिन् अध्यासो दृश्यते इत्याह—इतीति । नैकधर्माणाम् अनेकधर्माणाम् ॥

**गुरुगर्भभरक्लान्ताः[1] स्तनन्त्यो मेघपङ्क्तयः ।**
**अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ ९८ ॥**

**उत्सङ्गशयनं सख्याः स्तननं गौरवं क्लमः ।**
**इतीमे[2] गर्भिणीधर्मा बहवोऽप्यत्र[3] दर्शिताः॥९९॥**

*A.* तमुदाहरति—गुर्विति ॥

*B.* उदाहरणं गुर्विति । स्तननं प्रकाशितस्वनम् । अधित्यका पर्वतानाम् उपरितनमेखला । 'उपाधिभ्यां त्यकन्नासन्नदूरयोः'—इति त्यकन्प्रत्ययः ॥

**तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः ।**
**कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥ १००॥**

---

१. 'भराक्रान्ताः' इति पा० । २. 'इहेमे' इति पा० । ३. 'अन्यत्र' इति पा० ।

*A*. समाधिः उभयोर्मार्गयोः साधारण इत्याह—तदिति ॥

*B*. तदिति । तदेतत् समाधिवचनं काव्यानां सर्वस्वम् । कविसार्थः विद्वत्परिषत् । अत्रापि समाधिगुणः काव्यसर्वस्वम् । इति ब्रुवता काव्यमिति सामान्योपादानात् मार्गद्वयस्यापि साधारणः समाधिरभिहितो भवति ॥

**इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।**
**तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः ॥ १०१ ॥**

**इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।**
**तथापि न तदाख्यातुं सरस्वत्यापि शक्यते॥१०२॥**

*A*. प्रतिपादितं मार्गद्वयभेदमुपसंहरति—इतीति ॥

*B*. इतीति । उक्तप्रकारेण प्रस्फुटान्तरौ वैदर्भगौडीयौ मार्गौ भिन्नौ । वैदर्भे च गौडे च तत्तत्कविवशात् पुनरपि भेदा भवन्ति ; ते तु वक्तुं न शक्यन्ते । विद्यमानोऽपि भेदो वक्तुं न शक्यत इति दृष्टान्तेन समर्थयति—इक्ष्विति । इक्ष्वादीनां माधुर्यस्य अन्योन्यभेदः सुमहान् ; तथापि स माधुर्यविशेषः सरस्वत्यापि वक्तुं न शक्यते ; स्वसंवेद्य इत्यर्थः । तद्वत् असावपीति यावत् ॥

नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥ १०३ ॥

*A*. कवित्वोत्पत्तौ हेतुमाह — नैसर्गिकीति । पूर्वजन्मकृतविद्याभ्यासोत्पन्नज्ञानजनितसंस्कारागता या बुद्धिः सा नैसर्गिकी प्रतिभा । बहु श्रुतं शब्दस्मृत्यभिधानकोशच्छन्दोविचितिचित्रकलाकामशास्त्रदण्डनीतिज्ञानरूपम् । निर्मलं सत्संप्रदायागतं श्रुतम् । अमन्दः अभियोगः काव्यज्ञशिक्षया सन्दर्भनिर्माणपदावापयोश्च विपुलः अभ्यासः । इति त्रयः समुदिताः कवित्वोत्पत्तौ मनसः उल्लासे च हेतुः ॥

*B*. ईदृशकाव्यसम्पदो निमित्तमाह — नैसर्गिकीति । नैसर्गिकी स्वाभाविकी ; प्रतिभा ज्ञानम् । श्रुतं काव्यनाटकादिषु परिचयः । अभियोगः अभ्यासः ॥

न विद्यते यद्यपि पूर्ववासना-
गुणानुबन्धि प्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ १०४ ॥

*A*. नेति । जन्मान्तरवासनाजनितप्रतिभाभावेऽपि श्रुतेन शब्दस्मृत्यादिपरिज्ञानेन मन्त्रजपदेवतार्चनादिना च यत्नेन कवित्वं भवति ॥

*B*. पूर्वजन्मकृतपुण्यातिशयसंस्कारसञ्जातसमयज्ञानं यद्यपि न विद्यते, तथापि यत्नेन श्रुतेन च उपासिता भगवती वाग्देवी ध्रुवं निरतिशयम् अनुग्रहं करोतीत्यत्र न सन्देहः इत्याह—नेति॥

**तदस्ततन्द्रैरनिशं सरस्वती**
**श्रमादुपास्या[1] खलु कीर्तिमीप्सुभिः[2]।**
**कृशे[3] कवित्वेऽपि जनाः कृतश्रमा**
**विदग्धगोष्ठीषु विहर्तुमीशते ॥ १०५ ॥**

इत्याचार्यदण्डिविरचिते काव्यादर्शे प्रथमः परिच्छेदः

*A*. तदिति । तत् सरस्वत्युपासनस्य अवन्ध्यत्वात्, अस्ततन्द्रैः मन्त्रजपादिना काव्यलक्षणादिपरिशीलनेन च अनिशमुपास्यमाना कीर्तिमीप्सुभिः सरस्वती कवित्वाभावेऽपि पाण्डितगोष्ठीषु दोषगुणविवेचनवैदग्ध्यं ददाति ॥

इति तरुणवाचस्पतिविरचितायां काव्यादर्शटीकायां
प्रथमः परिच्छेदः

१. 'क्रमाद्' इति पा०। २. 'इच्छुभिः' इति पा०। ३. 'श्रुते' इति पा०।

*B*. तत् तस्मात् निरस्तालस्यैः कीर्तिकामैः पुरुषैः क्रमेण सरस्वती समाराध्या। कवित्वे कार्त्स्न्येन असत्यपि, प्रयत्न-प्राबल्येन जना विद्वद्गोष्ठीषु विहर्तुम् ईशते, क्रीडितुं समर्था भवन्ति, इत्याह—तदिति। अस्ततन्द्रैः निरस्तालसभावैः। विदग्धगोष्ठीषु विद्वत्समाजेषु। शेषं सुबोधम्॥

इति दण्ड्यलङ्कारव्याख्याने हृदयङ्गमे

वैदर्भगौडमार्गविभागो नाम प्रथमः परिच्छेदः

—o—

अथ द्वितीयः परिच्छेदः

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**

**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति॥ १॥**

*A*. काव्यशरीरं मार्गभेदेन द्विधा विभज्य दर्शितम्। इदानीं तद्धर्मान् अलङ्कारान् दर्शयितुम् अलङ्कारसामान्यलक्षणमाह—काव्येति। काव्यशोभाकरा ये धर्माः ते अलङ्काराः। ते च अद्यापि विकल्प्यन्ते, तत्तदलङ्कारावान्तरभेदा बहवः कविभिः प्रयुज्यन्ते; न पर्यवसिताः॥

*B*. पूर्वस्मिन् परिच्छेदे वैदर्भगौडमार्गविभागार्थं काव्यशरीरप्रदर्शनार्थं च असाधारणधर्माः केचिदलङ्कारा उक्ताः; इदानीं शब्दरचनालक्षणतः प्रतिष्ठापितस्य काव्यशरीरस्य साधारणा ये अलङ्काराः ते अस्मिन् परिच्छेदे वक्ष्यन्ते; इत्यत्रानयोः सम्बन्धः। वक्ष्यमाणस्य अलङ्कारस्य प्रथमं लक्षणप्रतिज्ञा क्रियते—काव्येति। अलङ्कारो नाम भूषणम्। यथा भूषणम् अङ्गस्य शोभायै भवति, तथा काव्यशरीरस्य शोभां जनयतो धर्मान् अलङ्कारान् आमनन्ति। ते धर्माः अद्यापि विदुषां शेमुषीविशेषात् बहुधा विकल्प्यन्ते। अतः तान् साकल्येन अभिधातुं कः समर्थः? न कोऽपि इति भावः। अपरे तु अलङ्कारलक्षणम् एवमाहुः—

"चतुर्णामपि पादानामादौ मध्येऽन्त एव वा।
स्थितिरेकपदस्यैव तदलङ्कारलक्षणम्"—इति॥

**किं तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम्[1]।**
**तदेव परिसंस्कर्तुमयमस्मत्परिश्रमः॥ २॥**

*A*. सामस्त्येन वक्तुं न शक्यते इति कारणेन किं केचिदलङ्काराः परित्यज्यन्ते? न इत्याह—किन्त्विति। सर्वावान्तरभेदगर्भे

१. 'प्रकल्पितम्' इति पा०।

तत्तदलङ्कारलक्षणं पूर्वाचार्यैः प्रदर्शितम् ; तदेव तत्तद्विशेषवत्तया स्फुटीकर्तुम् अयम् अस्मदुपक्रमः ॥

*B.* किन्त्विति । कतिपयभेदाः उदाह्रियन्ते; तेऽपि न स्वबुद्धया । कथं पुनः आरम्भावकाश इति चेत् — तेषां भेदानां बीजं पूर्वाचार्यैः प्रदर्शितम् ; तदेव तदाधारतया व्याख्यातुम् अत्र अस्माकमुपक्रमः । बीजमिव बीजम् ; यथा बीजम् अङ्कुरप्रसवादीनां कारणं, तद्वत् पूर्वाचार्यवचनमपि भेदानां कारणं भवितुमर्हतीति यावत् ॥

**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः ।**
**साधारणमलङ्कारजातमद्य प्रदर्श्यते ॥ ३ ॥**

*A.* काश्चिदिति । पूर्वं श्लेषादयो दश गुणा इत्युक्तम् । कथं ते अलङ्कारा उच्यन्ते इति चेत् —शोभाकरत्वं हि अलङ्कारलक्षणम् , तल्लक्षणयोगात् तेऽपि अलङ्काराः । शोभाहेतवो गुणाः, शोभातिशयहेतवः अलङ्काराः, इति कैश्चिदुक्तम् । शोभातिशयहेतुत्वस्यैव विवक्षितत्वात् नायं भेदहेतुः, इति गुणा अलङ्कारा एव, इति आचार्याः । ततः श्लेषादयः गुणात्मकालङ्काराः पूर्वं मार्गप्रभेदप्रदर्शनाय उक्ताः । इदानीन्तु मार्गद्वयसाधारणा अलङ्कारा उच्यन्ते ॥

*B.* काश्चिदिति । अस्मिन् परिच्छेदे वैदर्भगौडमार्गसाधारणम् अलङ्कारजातं प्रदर्श्यते इत्यर्थः ॥

स्वभावाख्यानमुपमा रूपकं दीपकावृती ।
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ॥४॥

समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः ।
प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ॥ ५ ॥

उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता ।
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ॥ ६ ॥

सहोक्तिः परिवृत्त्याशीः सङ्कीर्णमथ भाविकम् ।
इति वाचामलङ्काराः स्मर्यन्ते[2] पूर्वसूरिभिः ॥ ७ ॥

*A*. तानेव अलङ्कारान् उद्दिशति —स्वभावाख्यानमिति । दीपकावृती इत्यत्र[1] आवृतिशब्दः आवृत्तिवाचकः; वृतु वर्तने इत्यस्मात् आङुपसृष्टात् इगुपधादिति इन्प्रत्ययः कित् । अर्थावृत्तिः पदावृत्तिः इत्यावृत्तिर्द्विविधा ॥

*B*. तान् उद्दिशति—स्वभावाख्यानमिति । स्वभावाख्यानमित्यारभ्य स्मर्यन्ते पूर्वसूरिभिः इत्येतत्पर्यन्तं पञ्चत्रिंशदलङ्काराः प्रोक्ताः । पूर्वसूरिभिः काश्यपवररुचिप्रभृतिभिः ॥

---

१. 'अन्यत्' इति पा० । २ 'दर्शिताः' इति पा० ।

**नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।**
**स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा ॥ ८ ॥**

*A.* स्वभावाख्यानं लक्षयति—नानेति । पदार्थानां जातिक्रियागुणद्रव्याणां नानावस्थं नानाप्रकारं रूपं साक्षाद्विवृण्वती प्रत्यक्षमिव दर्शयन्ती आद्या अलङ्कृतिः, स्वभावोक्तिः जातिः इति च, संज्ञाद्वयाङ्किता उच्यते ॥

*B.* उद्देशक्रमेण स्वभावाख्यानस्वरूपमाह—नानेति । पदार्थानां स्थावरजङ्गमानां जातिक्रियागुणद्रव्यवशेन अनेकधा स्थितं रूपं, साक्षात् अव्याजेन, विवृण्वती या उक्तिः, सा स्वभावोक्तिः स्वभावाख्यानम् । तस्यैव जातिरिति केषांचिदाचार्याणां संज्ञा । जातिक्रियागुणद्रव्येषु प्रथमं जातेरुदाहरणमनन्तरं क्रियादेः ॥

**तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः ।**
**त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥ ९ ॥**

**कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः ।**
**पारावतः परिभ्रम्य[1] रिरंसुश्चुम्बति प्रियाम् ॥ १० ॥**

---

१. 'परिक्रम्य' इति पा० ।

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम् ।
नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥ ११ ॥

कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः ।
जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः ॥१२॥

*A.* शुकजातिस्वभावमाह—तुण्डैरिति । पारावतचुम्बनक्रियास्वरूपमाह—कलेति । प्रियास्पर्शगुणस्वरूपमाह—बध्नन्निति। ईश्वरद्रव्यस्वभावमाह—कण्ठेकाल इति । करस्थेन कपालेन, जटाभिः स्निग्धताम्राभिः, इत्यत्र इत्थंभूतलक्षणे तृतीया ॥

*B.* उदाहरणानि—तुण्डैरित्यादयः । तुण्डैः चञ्चुभिः ; इत्थंभूतलक्षणे तृतीया । मञ्जु मधुरम् ॥

जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम् ।
शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्
॥ १३ ॥

*A.* जातीति । जातिः गोत्वाश्वत्वशुकत्वादिः ; क्रिया गमनवचनरमणादिः ; गुणः शब्दस्पर्शरूपादिः ; द्रव्यं आकाशविष्णुव्रजादि । शास्त्रेषु इदं स्वभावाख्यानमेव भाति ; तत् तत्तद्वस्तुतत्त्वकथनात् काव्येष्वपि हृद्यतमम् ॥

*B*. जातीति । शास्त्रेषु धर्मागमादिशास्त्रेषु अनृतवचनाभावात् अस्यैव स्वभावालङ्कारस्य साम्राज्यं सम्पत्तिः भवति । काव्येषु वर्णनाप्राधान्यात् असत्यवचनं कल्पितमपि च अस्ति । तस्मात् तेषु स्वभावालङ्कारस्य नास्ति बहुलता, किञ्चिदीप्सितत्वं भवति ॥

**यथाकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते ।**
**उपमा नाम सा तस्याः प्रपञ्चोऽयं प्रदर्श्यते[1]॥१४॥**

*A*. उपमां लक्षयति — यथेति । 'भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत्'—इति सादृश्यलक्षणम् अन्यैरुक्तम् । नेदं तल्लक्षणम् । किंतु गुणद्रव्यक्रियाजातिषु उभयोः एकतमयोगो सादृश्यम्; इति यथाकथञ्चित् इत्युच्यते । उद्भूतं शब्देन अभिहितं वा, प्रतीयते वा, यत्र तत्र उपमा । अत्र वा-शब्दः अध्याहार्यः । अभिधीयमानसादृश्या प्रतीयमानसादृश्या इति द्विविधा उपमा । अलङ्कारान्तराणामपि प्रपञ्चनिदर्शनार्थम् अस्या उपमायाः प्रपञ्चः प्रदर्श्यते ॥

*B*. अतः परम् उपमालङ्कारलक्षणमाह — यथेति । यत्र उद्भूतं सादृश्यं यथाकथञ्चित् प्रदृश्यते, उपमा नाम सा । तस्या उपमायाः अयं प्रपञ्चः अत्र प्रदर्श्यते । तन्त्रान्तरेष्वपि उपमालक्षणमुक्तम् । तद्यथा—

---

१. 'निदर्श्यते' इति पा० ।

द्रव्यं द्रव्येण यच्चान्यत् साधर्म्यादुपमीयते ।
प्रायशः कृत्स्नशो वापि तदौपम्यस्य लक्षणम् ॥

समानमधिकं हीनं विपरीतैकदेशिकम् ।
यादृच्छिकमभूतञ्च सप्तौपम्यार्थसङ्ग्रहः ॥

भवद्त्तो हि मेधावी पितेवेति समोपमा ।
अतसीपुष्पसङ्काश इषुरित्यधिकोपमा ॥

आननं शशितुल्यं ते तन्त्रीस्वर इव स्वरः ।
पद्मपत्रनिभं नेत्रमिति हीनोपमा स्मृता ॥

यथा त्वं गुणवान् लोके तथा ते निर्गुणो रिपुः ।
इतीदमुपमानं तु विपरीतमिति स्मृतम् ॥

मध्याह्ने सूर्यवद्भाति भवानित्येकदेशिकम् ।
यादृच्छिकमितो व्योम्नः पतत्युल्केव देवता ॥

भवतो रोषसंपत्तिरौष्ण्यं चन्द्रमसो यथा ।
अभूतमप्रतर्क्यार्थमभूतोपममिष्यते ॥

इत्येवं सप्तविधानाम् उपमानानां प्रकारः धर्मोपमाद्युपमासु यथासंभवं द्रष्टव्यः ॥

अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।
इति धर्मोपमा साक्षात् तुल्यधर्मप्रदर्शनात्[1] ॥१५॥

*A*. अम्भोरुहमिति । आताम्रशब्देन समानधर्मस्य अभिधीयमानत्वात् धर्मोपमा ॥

*B*. अतःपरम् उदाहरणानि । यानि दुर्बोधानि तान्येव व्याख्यायन्ते । अम्भोरुहमिति धर्मोपमामाह; अत्र धर्मः इति उच्यते ताम्रगुणः ॥

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
इयं प्रतीयमानैकधर्मा वस्तूपमैव सा ॥ १६ ॥

*A*. राजीवमिति । प्रतीयमानैकसौरभ्यादिधर्मा वस्तूपमा । अतः परम् उपमाभेदलक्ष्यलक्षणानि प्रायेण सुगमानि इति न व्याख्यातानि ॥

*B*. वस्तूपमामाह—राजीवमिति । एवम्, उक्ते अनुक्तेऽपि धर्मे, वस्तुनि उक्ते सति, प्रतीयमानैकधर्मत्वात् वस्तूपमा मता ॥

---

१. 'प्रदर्शनम्' इति पा० ।

त्वदाननमिवोन्निद्रमरविन्दमभूदिति ।

सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥ १७ ॥

*B.* त्वदाननमिति । अम्भोजादीनाम् उपमानत्वेन प्रसिद्धिः; वक्त्रादीनाम् उपमेयत्वेन प्रसिद्धिः । अत्र तु मुखम् उपमानत्वेन कमलम् उपमेयत्वेन उक्तमिति, प्रसिद्धेः विपर्यासात्, असौ विपर्यासोपमा ज्ञातव्या ॥

तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।

इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी ॥ १८ ॥

त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित् ।

इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥ १९ ॥

पद्मं तावत् तवान्वेति मुखमन्यच्च तादृशम् ।

अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा ॥ २० ॥

*B.* पद्ममिति । तत्कारि सादृश्यकारि ॥

---

१. 'तव' इति पा० ।

समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव ।
ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥२१॥

त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥

*B.* त्वयीति । भिदा भेदः ॥

मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।
पद्मेऽपि सा यदस्तीत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥

*B.* मयीति । अस्याः मुखश्रियं लब्ध्वा हि चन्द्रमाः आत्मानं बहुमनुते इत्युत्प्रेक्षा । उत्प्रेक्षितार्थविशेषिता उपमा उत्प्रेक्षितोपमा । विकत्थनैः श्लाघादिभिः ॥

यदि किञ्चिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम् ।
तत् ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥२४॥

*B.* यदीति । विभ्रान्तलोचनं भ्रूविलाससहितं परिभ्रान्तनेत्रम् ॥

शशीत्युत्प्रेक्ष्य तन्वङ्गि त्वन्मुखं त्वन्मुखाशया ।

इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥२५॥

किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥

न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः ।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥

*B*. मेति । निर्णयो निश्चयः ॥

शिशिरांशुप्रतिद्वन्द्वि[1] श्रीमत् सुरभिगन्धि च ।
अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता॥२८॥

*A*. शिशिरेति । अम्भोजपक्षे — शिशिरांशुः प्रतिद्वन्द्वी बाधकः यस्य इति शिशिरांशुप्रतिद्वन्द्वि; श्रीमत् लक्ष्मीनिवासभूतम् । वक्त्रपक्षे—शिशिरांशोः प्रतिद्वन्द्वि चन्द्रसमानम् ; श्रीमत् कान्तिमत् । सुरभिगन्धि इति उभयत्र समानम् ॥

सरूपशब्दवाच्यत्वात् सा समानोपमा यथा ।

---

१. 'स्पर्धि' इति पा० ।

**बालेवोद्यानमालेयं सालकाननशोभिनी ॥ २९ ॥**

*A.* सरूपेति । सरूपशब्दवाच्यत्वात्—तादृशशब्दस्य अनेकद्रव्ययोगेन । सालकाननशोभिनी—उद्यानमाला सालानां काननेन शोभते ; बाला सालकेन आननेन शोभते ॥

*B.* सरूपेति । सरूपः समानरूपः; सरूपश्चासौ शब्दश्च सरूपशब्दः ; सरूपशब्दवाच्यत्वात् समानशब्दाभिधेयत्वात् । सालकाननशोभिनी—सालो नाम कश्चित् वृक्षविशेषः ; सालानां काननं सालकाननम् । अन्यत्र सालकाननम् अलकसहितं मुखम् ॥

**पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।**
**समानमपि सोत्सेकमिति निन्दोपमा स्मृता ॥ ३० ॥**

*B.* पद्ममिति । रजः मनसो दोषविशेषः परागश्च । रजःक्षयिशब्दाभ्यां निन्दा प्रतीयते । त्वन्मुखस्य स दोषो नास्ति। अतः ताभ्यां समानमपि तव मुखं सोत्सेकं सगर्वं भवति । तस्मान्निन्दा ॥

ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः ।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते॥ ३१॥

चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।
स गुणो वास्तु दोषो वेत्याचिख्यासोपमां विदुः॥ ३२ ॥

शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।
परस्परविरोधीति सा विरोधोपमा मता॥ ३३ ॥

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥३४ ॥

मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।
तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥३५॥

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।

इति विस्पष्टसादृश्यात् तत्त्वाख्यानोपमैव सा ॥ ३६ ॥

*B*. नेति । संशय्य प्रमाणेन निश्चितत्वात् तत्त्वाख्यानोपमा ॥

चन्द्रारविन्दयोः कक्ष्यामतिक्रम्य मुखं तव ।[1]
आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा ॥ ३७ ॥

*B*. चन्द्रेति । कक्ष्यां तुल्यताम् । आत्मना स्वयमेव तुल्यम् इत्यसाधारणोपमा इयम् ॥

सर्वपद्मप्रभासारः समाहृत इव क्वचित् ।
त्वदाननं विभातीति तामभूतोपमां विदुः ॥ ३८ ॥

*A*. सर्वेति । सकलकमलप्रभासारस्य आश्रयं विना समुचितस्य क्वचिदपि अभावात् अभूतोपमा ; अद्भुतोपमायां तु सिद्धस्य धर्मिणो धर्म्यन्तरावयवैर्योगः अद्भुतः ; इति भेदः ॥

चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।
परुषा वागितो वक्त्रादित्यसम्भावितोपमा ॥ ३९ ॥

---

१. 'कान्तिम्' इति पा०

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥

*B.* चन्दनेति । बहुभिः उपमितत्वात् बहूपमा ॥

चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
तव तन्वङ्गि वदनमित्यसौ विक्रियोपमा ॥ ४१ ॥

*B.* चन्द्रेति । उपमानस्य वस्तुनः विकारत्वेन उपमेयस्य वस्तुनः प्रकाशनं कृतम् ; अतो विक्रियोपमा ॥

पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥४२॥

*B.* पूष्णीति । पूष्णि यथा आतपः लक्ष्मीम् अधात् तद्वत् ॥

वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥ ४३ ॥

त्वदाननमधीराक्षमाविर्दशनदीधिति ।

अमन्दभृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुव्रतेनेव पायंपायमरम्यत ॥ ४५ ॥

*B.* वाक्येति । केनापि वाक्यार्थेन कोऽपि वाक्यार्थो यदि उपमीयते सा वाक्यार्थोपमा । सा उपमा, एकानेकेवशब्दत्वात् इवशब्दस्य एकत्वात् अनेकत्वाच्च, द्विधा द्विप्रकारा भवति । एकेन इवशब्देन उदाहरणम्—त्वदिति । अनेकेवशब्दोदाहरणम्—नलिन्या इति । पायंपायं पीत्वा पीत्वा ॥

वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः ।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥ ४६ ॥

नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु ।
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥४७॥

*A.* वस्त्विति । 'राजीवमिव ते वक्त्रम्' इति वस्तूपमा पदार्थोपमा । इयं तु प्रतिवस्तूपमा वाक्यार्थोपमा इति भेदः ॥

*B.* वस्त्विति । तत्सधर्मणः उपन्यस्तवस्तुसधर्मणो वस्तुनः

इति यावत् । तस्य न्यसनेन साम्यप्रतीतिर्भवतीति सदृशवस्तु-न्यासादुत्पन्ना सेयं प्रतिवस्तूपमा । असौ तु वक्ष्यमाणात् अर्थान्तरन्यासाभिधानात् अलङ्कारात् भिन्ना । प्रतिवस्तूपमायां समानधर्माणामेव न्यसनम्; अर्थान्तरन्यासे तु प्रस्तुतार्थसाधनस्य सदृशस्य वा विसदृशस्य वा न्यसनम्; इति भेदः । उदाहरणम्—नैकोऽपीति । ननु शब्दः प्रसिद्धौ ॥

**अधिकेन समीकृत्य हीनमेकक्रियाविधौ ।**
**यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥४८॥**
**दिवो जागर्ति रक्षायै पुलोमारिर्भवान् भुवः ।**
**असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥४९॥**

*B.* अधिकेनेति । एकक्रियाविधौ—अत्र हननक्रियायां—हीनाधिकौ समाहृतौ । अतः तुल्ययोगोपमेयम् । उदाहरणम्—दिव इति । जागर्ति निद्राक्षयं करोति । पुलोमारिः इन्द्रः । सावलेपाः सगर्वाः ॥

**कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।**
**राजन्ननुकरोषीति सैषा हेतूपमा मता ॥ ५० ॥**

*B.* कान्त्येति । कान्त्या धाम्ना धैर्येण इति औपम्यहेतुनिर्देशात् हेतूपमा ॥

न लिङ्गवचने भिन्ने न हीनाधिकतापि वा।
उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥ ५१॥

*A.* उपमानोपमेययोः लिङ्गभेदो वचनभेदश्च न दोषाय इत्याह—नेति॥

*B.* उपमानोपमेययोः लिङ्गवचनादिषु भिन्नेषु हीनाधिकतायां सत्यामपि तत् न दूषणाय भवतीत्याह—नेति। उपमादूषणाय लिङ्गभेदो वचनभेदश्च समर्थो न भवति। यस्मिन् लिङ्गभेदे वचनभेदे विदुषाम् उद्वेगो न स्यात् मनोव्यथा न स्यात्—तथा हीनत्वम् अधिकत्वञ्च विदुषाम् यत्र उद्वेगाय न—तत् उपमादूषणाय न भवति। ननु 'अधिकेन समाहृत्य' इत्यादिना तुल्ययोगोपमालक्षणमुक्तम्। तस्याश्च हीनाधिकोपमायाश्च को विशेषः इति चेत् उच्यते। तत्र तुल्ययोगितायां हीनम् अधिकेनैव योजयति। सा च योजना भिन्नार्थैः हीनाधिकैः यथा कथञ्चित् दृश्यमानोपमैः एकस्यां क्रियायामेव समाहृत्य उपयोगः, इति तुल्यक्रियायां एव उपयोगात् तुल्ययोगोपमा मता। अत्र तु अभिन्नार्थैः हीनाधिकैः साक्षाद्दर्शितोपमानशब्दैरुपमीयते इत्यदोषः। तुल्ययोगोपमायां प्रयोगोऽपि अस्ति—'दुदोह गां स यज्ञाय सस्याय मघवा दिवम्। सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्॥'

**स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव।**
**प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता[1] ॥५२॥**
**भवानिव महीपाल देवराजो विराजते।**
**अलमंशुमतः कक्ष्यामारोढुं तेजसा नृपः ॥५३॥**

*A.* यत्र लिङ्गभेदवचनभेदयोः अदूषणत्वं तत् दर्शयति—स्त्रीति। षण्डः स्त्रीवत्, स्त्री पुमानिव, विद्या धनमिव, इति लिङ्गभेदः। प्राणा इव प्रियोऽयम् इति वचनभेदः। 'असवो जीवितं प्राणाः' इति प्राणशब्दस्य नित्यबहुवचनान्तत्वात्, स्त्रयादीनां नियतलिङ्गत्वाच्च, विदुषां अनुद्वेगकराः प्रयोगाः। हीनाधिकतायाः अदूषणत्वं दर्शयति—भवानिति। महीपाल भवानिव देवराजो विराजते। राज्ञो मनुष्यस्यापि लोकपालत्वात् न हीनोपमात्वम्। अत एव हेतोः अंशुमतो देवत्वात् अधिकोपमात्वमपि न दोषाय॥

*B.* उदाहरणानि—स्त्रीति। षण्डः नपुंसकः; भिन्नलिङ्गस्य उदाहरणमेतत्। प्राणाः इव प्रियः इति भिन्नवचनस्योदाहरणमेतत्। विद्याः धनमिव आर्जिताः इति भिन्नवचनभिन्नलिङ्गयोः

१ 'अर्जिताः' इति पा०।

उदाहरणम् । तत्र विद्याः श्रुतिस्मृतीतिहाससाङ्ख्ययोगन्याय-वैशेषिकमीमांसागणितगान्धर्वचिकित्साधनुर्वेदपुराणज्यौतिषशब्द-शास्त्रकृषिवार्ताशिल्पम् इति अष्टादश। ताः सर्वा विद्याः धनमित्र अर्जिताः इत्यर्थः ॥

**इत्येवमादौ सौभाग्यं न जहात्येव जातु चित् ।**
**अस्ति च[1] कचिदुद्वेगः प्रयोगे तद्विदां[2] यथा ॥५४॥**

*B*. इत्येवमादयो विदुषाम् अनुद्वेगकराः । उद्वेगकराः पुनः एते इत्याह—इतीति । तद्विदां काव्यगुणदोषविदाम् ॥

**हंसीव धवलश्चन्द्रः सरांसीवामलं नभः ।**
**भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥ ५५ ॥**

**ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् ।**
**गुणदोषविचाराय स्वयमेव मनीषिभिः ॥ ५६ ॥**

*A*. हंसीति—हंसीवत् धवलः चन्द्रः इति उपमायाः समानलिङ्गस्य हंसशब्दस्य विद्यमानत्वात् , सरांसीव अमलं नभः

---

१. 'अस्त्येव' इति पा० । २. 'वाग्विदां' इति पा० ।

इति उपमेयसमानवचनस्य सरः इति शब्दस्य विद्यमानत्वाच्च, लिङ्गवचनभेदौ उद्वेगकरौ । भर्तृभक्तो भटः श्वेव इति हीनत्वात्, खद्योतो भाति भानुवत् इति अधिकत्वाच्च, वर्ज्यते । इति कारणम् ऊह्यम् ॥

*B.* उदाहरति—हंसीति । हंसीव धवलः चन्द्रः इति भिन्नलिङ्गस्य उदाहरणम् । सरांसीव अमलं नभः इति भिन्नवचनस्योदाहरणम् । भर्तृभक्तो भटः श्वेव इति अधिको भटो हीनेन शुना उपमीयते इति हीनोदाहरणम् । खद्योतो भाति भानुवत् इति हीनः खद्योतः अधिकेन भानुना उपमीयते इति अधिकोदाहरणम् । ईदृशामिति—ईदृशं विद्वाद्भिः वर्ज्यते । तत्र कारणं चिन्त्यताम्—रसविदां स्वसंवेद्यमित्यर्थः ॥

**इववद्वायथाशब्दाः समाननिभसन्निभाः ।**
**तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥ ५७ ॥**

**प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।**
**सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ ५८ ॥**

**प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः ।**
**सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ५९ ॥**

कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये च तुल्यार्थवाचिनः[1] ॥६०॥
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥
आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्धे[2] हसतीर्ष्यत्यसूयति ॥ ६२ ॥
तस्य मुष्णाति सौभाग्यं तस्य कान्ति विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ६३ ॥
तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥
६५ ॥

१. 'अन्यूनार्थवादिनः' इति पा० । २. 'संधत्ते' इति पा० ।

*A*. उपमाद्योतकान् उपन्यस्यति—इवेति । वत् इति इव-शब्दपर्यायः; अव्ययं वतिप्रत्ययश्च द्वयमपि गृह्यते; 'व्योम पाश्चिमकलास्थितेन्दुवत्', 'खद्योतो भाति भानुवत्' इति च दर्शनात्। तुलां तेनाधिरोहति इति सहार्थे तृतीया ॥

*B*. अतः परं यैः शब्दैः उपमा सूच्यते तान् सर्वान् सादृश्यपर्यायान् कथयति—इवेति। कल्पदेशीयदेश्यादि—'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इतिविहितप्रत्यायान्ताः ये शब्दाः । समासश्च बहुव्रीहिरिति 'सप्तम्युपमान—' इत्यादिना निष्पन्नो गृह्यते। स्पर्धते जयति इत्यादीनि क्रियापदानि सादृश्यसूचकानि ॥

इत्युपमाचक्रम्

---

अथ रूपचक्रम्

**उपमैव तिरोभूतभेदा रूपकमुच्यते ।**
**यथा बाहुलता पाणिपद्मं चरणपल्लवम् ॥ ६६ ॥**

*A*. रूपकं लक्षयति—उपमैवेति । तिरोभूतभेदा—उपमेयस्य उपमानेन सादृश्यातिशयविवक्षया भेदद्योतकेवादिशब्दपरित्यागेन सामानाधिकरण्येन मुखचन्द्रः इति तदात्मत्वारोपणं

रूपकम् । तद्दर्शयति—यथेति । बाहुः लतेव इति विगृह्य 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः ॥

*B*. अथ रूपकलक्षणमाह—उपमैवेति । अस्यार्थः—उपमानवाची शब्दः परित्यक्तस्वार्थः उपचारादुपमेयगतं विशेषणं ब्रुवाणः उपमानोपमेययोः अभेदरूपणात् रूपकशब्दवाच्यो भवतीति रूपकम् । साम्यप्रतीतौ उपमैव कथं रूपकम् इति चेत्, न केवलं साम्यप्रतीतिमान् रूपकालङ्कारः, किन्तु उपमानोपमेययोः भेदे या साम्यप्रतीतिः सा उपमा; अभेदे या साम्यप्रतीतिः सा रूपकम् । उदाहरति—यथेति । बाहुलता इत्यत्र लतेव बाहुः इति उपमास्थितिः तिरोभूता । एवं पाणिपद्मं, चरणपल्लवम्, इत्यत्रापि । तत्र लक्षणमुक्तम्—'साकल्येनैकदेशेन किञ्चित्साधर्म्यतोऽपि वा । रूपकं त्रिविधं काव्ये कवयस्तत्प्रचक्षते ॥ हर्षकान्तिः स्मितज्योत्स्नो दन्तांशुः पक्ष्मलक्षणः । तस्या हि मुखचन्द्रोऽयमिति साकल्यरूपकम् । तेजसार्कः शशी कान्त्या भवान् बुद्ध्या बृहस्पतिः । ऋद्ध्या वैश्रवणश्चेति कथयन्त्येकदेशिकम् ॥ व्यूढं पुरुषसिंहस्य विलोचनयुगं जगत् । ददाह भूयः कालाग्निरिति साधर्म्यरूपकम् ॥' बाहुलतेत्यादीनि समस्तरूपकोदाहरणानि ॥

**अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः[1] ।**

---

१. 'नखत्विषः' इति पा० ।

बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥ ६७ ॥

*A*. अङ्गुल्य इति । ते अङ्गुल्यः पल्लवानि, नखार्चिषः कुसुमानि, बाहू लते, त्वं वसन्तश्रीः ॥

*B*. व्यस्तरूपकोदाहरणमाह—अङ्गुल्य इति ॥

इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥ ६८ ॥

*A*. इतीति । इत्येतद्वाक्यम् असमस्तरूपकम् । पूर्वं समस्तरूपकम् । स्मितमिति—मुखेन्दोः इति रूपणस्य समस्तत्वात्, स्मितं ज्योत्स्ना इति अस्य व्यस्तत्वाच्च, समस्तव्यस्तरूपकम् । रूपकविशेषलक्षणानि स्पष्टानि ॥

*B*. समस्तव्यस्तरूपकमस्तीत्याह—स्मितमिति ॥

ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥

अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।

तद्योग्यस्थानविन्यासादेतत् सकलरूपकम् ॥७०॥

*B.* अङ्गुल्यादाविति । तद्योग्यस्थाने—मूर्ध्नि—विन्यासात् ॥

अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥७१॥

मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।
नान्यथाकृतमत्रास्यमतोऽवयवरूपकम् ॥ ७२ ॥

*B.* मञ्जरीति । मुखावयवानि रूपितानि; मुखम् अधिकृतम्; अतः अवयवरूपकमिदम् ॥

[1]वलितभ्रु गलद्धर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम्॥ ७३ ॥

अवि[2]कृत्य मुखाङ्गानि मुखमेवारविन्दताम् ।
आसीद्गमितमत्रेदमतोऽवयविरूपकम् ॥ ७४ ॥

१. 'वल्गित' इति पा० । २. 'अविवृत्य' इति पा० ।

मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।
मुखेनमुग्धः सोऽप्येष जनो रागमयः कृतः ॥ ७५ ॥

एकाङ्गरूपकञ्चैतदेवं द्विप्रभृतीन्यपि ।
अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ ॥७६॥

*B.* एकेति । नेत्रमेव उत्पलतया रूपितम् । अतः एकाङ्ग-रूपकम् एतत् । एवं द्विप्रभृतीन्यपि अङ्गानि रूपयन्ति । तत्रापि द्व्यङ्गरूपकं, त्र्यङ्गरूपकम्, इति संज्ञा द्रष्टव्या। योगायोगौ भिदाकरौ इति रूपकान्तरस्य लक्षणम् उच्यते । अत्र रूपकप्रपञ्चे योगायोगौ कौचिद्विशेषौ भिदाकरौ । योगो नाम अविरुद्धेन द्रव्यान्तरेण योगः । विद्येते इत्यध्याहार्यः ॥

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।
इति पुष्पद्विरेफाणां सङ्गत्या युक्तरूपकम् ॥७७॥

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।

इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥
७८ ॥

रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥

मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥

*B.* रूपणादिति । अङ्गिनो रूपणात् अङ्गानां रूपणारूपणाच्च विषमं नाम रूपकं भवति । मदेति—तत्र मुखम् अङ्गि चन्द्रतया रूपितम्; भ्रूः तावत् लतारूपेण रूपिता ; कपोलो न रूपितः । अत एव विषमं रूपकम् ॥

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ८१ ॥

विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत् सविशेषणरूपकम् ॥ ८२ ॥

*B* सविशेषणरूपकमाह—हरीति । हरिपादः विशेषण-विशिष्टः सुरानन्दोत्सवध्वज इव जयति । विशेषणेति—विशेषणसमग्रस्य केतोः यत् ईदृग्रूपं, पादे तस्य अर्पणेन सविशेषण-रूपकम् । अत्र जाह्नवीजलस्य अंशुकत्वेन रूपणात् रूपकसमुपेतेन विशेषणेन सहितध्वजस्वरूपं पादे अर्पितम् ॥

[1]निमीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥

अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।
अत्र [2]सन्दिश्यते यस्माद्विरुद्धं नाम रूपकम् ॥
६४ ॥

*B*. निमीलयतीति । विरुद्धरूपकमेतत् । अन्यकार्यस्य मृत्यु-कार्यस्य ॥

गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५॥

---

१. 'न मीलयति' इति पा० । २. 'सन्दर्श्यते' इति पा० ।

गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः ।
कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥

राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
सखि वक्त्राम्बुजमिदं तवेति[1] श्लिष्टरूपकम्॥८७॥

*A.* राजहंसेति । राजहंसाः राजश्रेष्ठाः हंसाविशेषाश्च । भ्रमराः मधुकराः कामुकाश्च ॥

*B.* राजेति । राजहंसाः श्रेष्ठा राजानः तथा हंसाविशेषाश्च । भ्रमरः भृङ्गः धूर्तश्च ॥

इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥

अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥ ८९ ॥

चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।

---

१ 'तदेतत्' इति पा० ।

असमग्रोऽप्यसौ शश्वद्यमापूर्णमण्डलः ॥ ९० ॥

*B.* उपमाव्यतिरेकरूपकयोः स्वरूपमाह—इष्टमिति । मुख्ययोः पदार्थयोः साधर्म्येण रूपकं यत् दृश्यते तत् उपमारूपकं भवति । उभयोः यत्र वैधर्म्येण रूपकं दृश्यते तत् व्यतिरेकरूपकम् । इति रूपकद्वितयम् इह लक्षितम् ॥

मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।
न ते सुन्दरि संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥

मुखेन्दुरपि ते चण्डि मां निर्दहति निर्दयम् ।
भाग्यदोषान्ममैवेति तत् समाधानरूपकम्॥९२॥

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्तकी तव ।
लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥९३॥

*B.* रूपकरूपकमाह—मुखपङ्कजेति । मुखं पङ्कजत्वेन रूपितम्; तत् रङ्गत्वेन रूपितम्; भ्रूः लतारूपेण रूपिता; सा नर्तकीरूपेण रूपिता । एतत् रूपकरूपकम् ॥

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमे ।

एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ९४ ॥

मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥

न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ९६ ॥

*B.* न पर्यन्त इति । अनुक्ताः अपि भेदाः रूपकोपमयोः अनया दिशा प्राज्ञैः अनुमीयताम् ॥

इति रूपकचक्रम्[1]

---

जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना ।
सर्ववाक्योपकारश्चेत् तदाहुर्दीपकं यथा ॥ ९७ ॥

*A.* दीपकं लक्षयति—जातीति । अनेकवाक्याश्रयं दीपकम् । एकवाक्यगतेन जातिक्रियागुणद्रव्यवाचिना सर्ववाक्यसम्बन्धश्चेत् तत् दीपकम् । दीपवत् दीपकम् । एकत्रास्थितो यथा दीपः

---

१. 'उपचारः' इति पा० ।

प्रकाशयति दूरे, एवम् एकवाक्यास्थितमपि पदं वाक्यान्तराण्यपि प्रकाशयति ॥

*B*. अथ प्रसिद्धं दीपकं लक्षयति—जातीति । एकत्र वाक्ये वर्तिना जातिवाचिना क्रियावाचिना गुणवाचिना द्रव्यवाचिना वा पदेन सर्ववाक्योपकारश्चेत् तत् दीपकम् आहुः । उपकारो वाक्यस्य नैरपेक्ष्यसंपादनम् । दीपकस्य श्लोकादिमध्यान्ताः स्थानानि । तत्र ग्रन्थान्तरेष्वपि एवमेव उक्तम्—'पदेनैकेन सिध्यन्ति वाक्यार्था बहवो यदि । पद्यादिमध्यपर्यन्तेष्वेतद्दीपकलक्षणम् ॥'

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।
स एवावनताङ्गीनां मानभङ्गाय कल्पते ॥ ९८ ॥

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥९९॥

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः ।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥ १०० ॥

१. 'नतगात्रीणाम्' इति पा० ।

विष्णुना विक्रमस्थेन दानवानां विभूतयः ।
क्वापि नीताः कुतोऽप्यासन्नानीता देवतर्द्धयः ॥
१०१ ॥

*A.* जातिदीपकं दर्शयति—पवन इति । स एव इति तच्छब्दप्रयोगः पवनशब्दस्य जातिवाचिताद्योतनार्थः । कश्चित् जीर्णं पर्णं हरति, स एव तज्जातीयो मानभङ्गं करोति, इति स एव इति प्रयोगः वाक्यार्थद्वयस्य एककर्तृकताद्योतकः आदौ प्रयुक्तः । क्रियादीपकम्—चरन्तीति । गुणदीपकम्—श्यामला इति । द्रव्यदीपकम्—विष्णुनेति ॥

*B.* क्रमेण एषाम् उदाहरणानि—पवन इति । पवनः इति जातिशब्दः सर्वत्र अनुषक्तो द्रष्टव्यः । चरन्तीति—चरन्ति इति क्रियापदं सर्वत्रानुषक्तं द्रष्टव्यम् । श्यामला इति गुणोदाहरणम् ; श्यामगुणाः उभयत्र अनुषक्ताः । विष्णुनेति द्रव्योदाहरणम् ; परवस्तुवाची विष्णुशब्दः अनुषक्तः । कुतोऽपि आनीता आसन् इति सम्बन्धः ॥

इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि ।
वाक्ययोर्दर्शयिष्यामः कानिचित्तानि तद्यथा ॥
१०२ ॥

*A*. इतीति । इति आदिदीपकानि जातिक्रियागुणद्रव्यवाचीनि चत्वारि दर्शितानि । मध्यदीपकत्वेन अन्तर्दीपकत्वेन च द्वे द्वे दर्शयिष्येते विस्तरभयात् ॥

**नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।**
**बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः॥१०३॥**

*A*. नृत्यन्तीति । अत्र मध्यमवाक्ये कलापिनः इति जातिदीपकम् ॥

*B*. जातिवाचिशब्दस्य मध्यगतस्य उदाहरणम् आह—नृत्यन्तीति । जातिवाची कलापिशब्दः सर्वत्र अनुषक्तः। एवं गुणद्रव्यवाचिनावपि मध्यदीपकौ द्रष्टव्यौ ॥

**मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते ।**
**चर्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम् ॥**
१०४ ॥

*A*. मन्द इति । अत्र मध्यवाक्ये जायते इति क्रियादीपकम् ॥

**जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम् ।**
**चलं च तडितां दाम बलं कुसुमधन्वनः ॥**
१०५ ॥

*A.* जलमिति । अत्र कुसुमधन्वनः इति द्रव्यवाचकम् अन्तदीपकम् ॥

*B.* अन्तदीपकस्य उदाहरणं दर्शयन् गुणवाचिना उदाहरणमाह—जलमिति । जलं कुलं दाम च कुसुमधन्वनो बलम् इत्युक्ते सिंहावलोकनन्यायेन उपकृतं द्रष्टव्यम् । द्रव्यवाचि श्लोकान्तवर्ति पदं वाक्यान्तरस्य उपकारकम् इति अन्तदीपकम् ॥

**त्वया नीलोत्पलं कर्णे स्मरेणास्त्रं शरासने ।**
**मयापि मरणे चेतस्त्रयमेतत् समं कृतम् ॥१०६॥**

*A.* त्वयेति । अत्र कृतम् इति अन्ते क्रियादीपकम् । त्रयम् एतत् समं समकालं कृतम् इति चित्रहेत्वलङ्कारो द्रष्टव्यः ॥

*B.* त्वयेति । एतत् कृतम् इति श्लोकान्तवर्ति क्रियावाचिपदं वाक्यान्तरेण सम्बद्धं सत् तत्तदर्थं द्योतयतीति अन्तदीपकम्। इदं सिद्धक्रियादीपकम्; पूर्वं तु साध्यक्रियादीपकम् ॥

**शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः ।**
**स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः ॥**
**१०७ ॥**

**इत्यादिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी ।**

**वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥ १०८ ॥**

*A.* शुक्ल इति । अत्र वृद्धैय इति पदं क्रियावाचि । माला-दीपकम् ॥

*B.* मालादीपकमाह—शुक्लः इति । शुक्लः पक्षः चन्द्रस्य वृद्ध्यै भवति । स चन्द्रः पञ्चशरस्य वृद्ध्यै भवति । स पञ्चशरः रागस्य वृद्ध्यै । स रागः रत्युत्सवाश्रियः वृद्ध्यै । इतीति—इति उक्तप्रकारेण श्लोकस्य आद्यंशगतेन वृद्ध्यै-शब्देन वाक्यमाला पूर्व-पूर्वापेक्षया प्रयुक्तेति मालादीपकम् ॥

**अवलेपमनङ्गस्य वर्धयन्ति वलाहकाः ।**
**कर्शयन्ति च घर्मस्य मारुतोद्धूतशीकराः ॥ १०९ ॥**

**अवलेपपदेनात्र वलाहकपदेन च ।**
**क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थदीपकम् ॥ ११० ॥**

*A.* अवलेपमिति । वलाहकशब्दो जातिवाची । अवलेप-

---

१. 'विदुः' इति पा० ।

शब्दो गुणवाची । एते द्वे पदे आदिवाक्यगते वर्धयन्ति कर्श-यन्ति इति विरुद्धक्रियासम्बद्धे इति विरुद्धार्थदीपकम् ॥

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥
१११ ॥

अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।
यतो जलधरावल्या तस्मादेकार्थदीपकम्॥११२॥

*A.* हरतीति। हरत्याद्यनेकक्रियापदोपात्ता एकक्रिया जलधरा-वल्या अन्तवाक्यगतया दीप्यते यत् तस्मात् एकार्थदीपकम् ॥

*B.* अनेकेति । अत्र अस्मिन्नुदाहरणे जलधरावल्या हरति गृह्णाति आदत्ते इति त्रिभिः पदैः एकैव अदर्शनक्रिया दीपिता भवति । तस्मात् एकार्थदीपकम् ॥

हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः ।
दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः ॥
११३ ॥

**अत्र धर्मैरभिन्नानामभ्राणां दन्तिनां[1] तथा ।**
**भ्रमणेनैव सम्बन्ध इति श्लिष्टार्थदीपकम् ॥**
**॥ ११४ ॥**

*A.* ह्द्येति । हृद्यगन्धवहत्वं तुङ्गत्वं तमालश्यामलकान्तित्वं च श्लेषानुबद्धम् । भ्रमन्तीति क्रियापदमादिवाक्यगतं वाक्यान्तरमपि दीपयति । इति श्लिष्टार्थदीपकम् ॥

*B.* हृद्येति । हृद्यगन्धवहाः इत्यादि उभयत्र तुल्यम् । एते जीमूताः दिवि भ्रमन्ति । तस्मात् मतङ्गजाश्च भुवि भ्रमन्ति । उभयश्लेषयुक्तत्वात् श्लिष्टार्थदीपकम् ॥

**अनेनैव प्रकारेण शेषाणामपि दीपके ।**
**विकल्पानामवगतिर्[2]विधातव्या विचक्षणैः॥११५॥**

*A.* अनेनेति । जातिक्रिययोः दीपकत्वं गुणद्रव्ययोः दीपकत्वम् इत्यादयो दीपकभेदाः द्रष्टव्याः ॥

*B.* अनेनेति । अनुक्तानामपि दीपकप्रकाराणाम् अनुगतिः अवगमः अनेनैव प्रकारेण प्राज्ञैः कर्तव्या । एवेति अवधारणस्य प्रकारान्तरम् उपायभूतं नास्ति इत्यर्थः ॥

इति दीपकचक्रम्

---

१. 'हस्तिनामपि' इति पा० । २. 'अनुगतिः' इति पा० ।

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव[1] च ।
दीपकस्थान एवेष्टमलङ्कारत्रयं यथा ॥ ११६ ॥

*A.* आवृत्तिं लक्षयति—अर्थेति । आवर्त्यते इति आवृत्तिः इति निरुक्तिरेव लक्षणम् । दीपकस्थाने अनेकवाक्यविषये इत्यर्थः । सा अर्थावृत्तिः पदावृत्तिः उभयावृत्तिः इति त्रिविधा ॥

*B.* आवृत्त्यलङ्कारं लक्षयति—अर्थेति । एकस्यैव अर्थस्य भिन्नरूपैः शब्दैः आवृत्तिः अर्थावृत्तिः । समानरूपस्य पदस्य पुनरुक्तिः पदावृत्तिः । अर्थस्य च पदस्य च अविशेषेण पुनरुक्तिः उभयावृत्तिः । दीपकस्थान एवेति श्लोकादिमध्यान्तस्थानेषु इत्यर्थः ॥

विकसन्ति कदम्बानि[2] स्फुटन्ति कुटजद्रुमाः[3] ।
उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च[4] ॥ ११७ ॥

उत्कण्ठयति मेघानां माला बृन्दं[5] कलापिनाम् ।
यूनां चोत्कण्ठयत्येष[6] मानसं मकरध्वजः ॥११८॥

१. 'रित्यपि' इति पा०। २. 'सरोजानि' इति पा०। ३. 'कुटजोद्गमाः' इति पा०। ४. 'कुमुदानि च' इति पा०। ५. 'वर्गम्' इति पा०। ६. 'अद्य' इति पा०।

जित्वा विश्वं भवानत्र[1] विहरत्यवरोधनैः ।

विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥११९॥

A. विकसन्तीति अर्थावृत्तिः । उत्कण्ठयतीति पदावृत्तिः । जित्वेति उभयावृत्तिः ॥

*B.* क्रमेण उदाहरणमाह—विकसन्तीति । विकसन्तीत्यादिभिः क्रियापदैः कदम्बादीनां विकास एव केवलमुक्तः । अतः अर्थावृत्तेः उदाहरणम् एतत् । पदावृत्तिमाह—उत्कण्ठयतीति । अत्र उत्कण्ठयतीति पदम् आवृत्तम् । उत्कण्ठयति उद्ग्रीवं करोति । उत्तरत्र उत्कण्ठयति उत्कलिकोत्तरं करोति । उभयावृत्त्युदाहरणमाह — जित्वेति । जित्वा विश्वं भवानद्य-विहरत्यवरोधनैः इत्यनेन वर्णनीयस्य जेतव्यशेषरहितः विश्वजयो नाम अर्थः उक्तः भवति । समरनिहतानामेव वैरिणां स्वर्गगमनम् अप्सरोभिः सह क्रीडा चेति, विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः इत्यनेनापि प्रागुक्त एवार्थः अभिहितः; इत्यर्थावृत्तिः । विहरति विहरति इत्युक्तत्वात् पदावृत्तिश्च ॥

इत्यावृत्तिचक्रम्

---

१. ‘ अद्य ’ इति पा० ।

**प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।**

**अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥१२०॥**

*A.* आक्षेपं लक्षयति—प्रतिषेधेति । आक्षेप्यभेदानन्त्यात् अनन्तता । उपलक्षणमेतत् आक्षेपहेतुभेदाच्च इति ॥

*B.* आक्षेपालङ्कारमाह—प्रतिषेधेति । पूर्वं वस्तुविशेषमभिधाय पुनः तस्यैव विषयवशेन वा हेतुवशेन वा नैवम् इत्यादिप्रतिषेधवचनैः अपाकरणम् आक्षेपः । तस्य भूतभविष्यद्वर्तमानकालवशेन त्रैविध्यं भवति । त्रिविधस्यापि अस्य पुनः आक्षेप्यविशेषाणाम् आनन्त्यात् आनन्त्यम् अस्तीति आह—अथेति ॥

**अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।**

**इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः॥१२१॥**

**इत्यनङ्गजयायोगबुद्धिर्हेतुबलादिह ।**

**प्रवृत्तैव यदाक्षिप्ता वृत्ताक्षेपः स ईदृशः ॥१२२॥**

*A.* अनङ्ग इति । अङ्गराहितत्वं पञ्चेषुत्वं विश्वस्य जेतव्यत्वं च इति हेतुभिः अनङ्गजयायोगबुद्धिः जाता । प्रतिबध्यते च सा अथवा विचित्रा वस्तुशक्तयः इति ॥

*B*. उदाहरणानि—अनङ्ग इति। पौष्पैः इत्युक्ते जयस्य असम्भावना। अथवा विचित्रा वस्तुशक्तयः इति समाधानहेतू-पन्यासात् असम्भावनापि वारिता। इत्यनङ्ग इति सुबोधम् एतत्। उत्तरत्रापि दुर्बोधान्येव व्याख्यायन्ते॥

कुतः कुवलयं कर्णे करोषि कलभाषिणि।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे॥१२३॥

स वर्तमानाक्षेपोऽयं कुर्वत्येवासितोत्पलम्।
कर्णे काचित् प्रियेणैवं चाटुकारेण रुध्यते॥१२४॥

सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ लप्स्यसे।
अन्यचुम्बनसङ्क्रान्तलाक्षारक्तेन चक्षुषा॥१२५॥

सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी।
कदाचिदपराधोऽस्य भावीत्येवमरुन्द्ध यत्॥१२६॥

तव तन्वङ्गि मिथ्यैव रूढमङ्गेषु मार्दवम्।
यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम्॥
१२७॥

धर्माक्षेपोऽयमाक्षिप्तमङ्गनागात्रमार्दवम् ।

कामुकेन यदत्रैवं कर्मणा तद्विरोधिना ॥ १२८ ॥

*B.* तत्रेति । तत्रेत्यादीनि कालत्रयोदाहरणानि । धर्माक्षेपः मृदुगुणविरोधिन्या रुजाक्रियया मार्दवधर्मः आक्षिप्यते इति ॥

सुन्दरी सा न वेत्त्येष विवेकः केन[1] जायते ।

प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥१२९॥

धर्म्याक्षेपोऽयमाक्षिप्तो धर्मी धर्मं प्रभाह्वयम् ।

अनुज्ञायैव[2] यद्रूप[3]मत्याश्चर्यं विवक्षता ॥ १३० ॥

*A.* सुन्दरीति । विलक्षणसंस्थानावयववती सुन्दरी । सा सुन्दरी वा न वा इति विवेक्तुं न शक्या, यतः विद्युत्प्रभासदृशं तरलम् उज्ज्वलम् प्रभामात्रं दृश्यते । तत्र प्रभायां प्रभाश्रयोऽङ्गं न दृश्यते । आक्षेपविशेषलक्ष्यलक्षणानि स्पष्टानि ॥

*B.* धर्म्याक्षेप इति । विवक्षता वक्तुम् इच्छता । अत्र धर्मशब्देन वर्णनीया उच्यते । अत्यद्भुतं वर्णनीयरूपं वक्तुकामः— प्रभामात्रं पश्यामः, प्रभायास्त्वाश्रयो न दृश्यते—इत्याह ॥

---

१. 'कस्य' इति पा० । २. 'इव' इति पा० । ३. 'तद्रूप' इति पा० ।

चक्षुषी तव रज्येते स्फुरत्यधरपल्लवः ।
भ्रुवौ च भुग्ने न तथाप्यदुष्टस्यास्ति मे भयम् ॥
१३१ ॥

स एष[1] कारणाक्षेपः प्रधानं कारणं भियः ।
स्वापराधो निषिद्धोऽत्र यत् प्रियेण पटीयसा ॥
१३२ ॥

*B.* स इति । पटीयसा प्रगल्भेन ।

दूरे प्रियतमः सोऽयमागतो जलदागमः ।
दृष्टाश्च फुल्ला निचुला न मृता चास्मि किञ्चिदम् ॥
१३३ ॥

कार्याक्षेपः स कार्यस्य मरणस्य निवर्तनात् ।
तत्कारणमुपन्यस्य दारुणं जलदागमम् ॥ १३४ ॥

*B.* दूर इति । वर्षासु प्रियतमेषु अनागतेषु कामिन्यः कथाशेषा भवन्ति इति कविसमयः । अहं प्रोषितदयिता प्राप्ते-

१. 'एव' इति पा० ।

ऽपि घनसमये प्राणिमि, इति कारणे सत्यपि कार्यं न दृश्यते, इति कार्याक्षेपः ॥

**न चिरं मम तापाय तव यात्रा भविष्यति ।**
**यदि यास्यसि यातव्यमलमाशङ्कयात्र ते ॥१३५॥**

**इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः ।**
**मरणं सूचयन्त्यैव सोऽनुज्ञाक्षेप उच्यते[1]॥ १३६॥**

*B*. नेति । तव यात्रा न मे चिरं तापाय भवति; नात्र शङ्का कर्तव्या; यास्यसि चेत् याहि इत्यनुज्ञा । एवम् अनुजानत्याः तव यात्रा न मे चिरं तापाय इति वचनं मरणसूचनं यात्रां निवर्तयति । इत्यनुज्ञामुखेन गमनस्य आक्षेपात् अयम् अनुज्ञाक्षेपः ॥

**धनं च बहु लभ्यं ते सुखं क्षेमं च वर्त्मनि ।**
**न च मे प्राणसन्देहस्तथापि प्रिय मा स्म गाः॥**
**१३७॥**

**इत्याचक्षाणया हेतून् प्रिययात्रानुबन्धिनः[2] ।**

---

१. 'ईदृशः' इति पा० । २. 'रोधिनः' इति पा० ।

प्रभुत्वेनैव रुद्धत्वात् प्रभुत्वाक्षेप उच्यते ॥१३८॥

*B.* धनमिति । गमनाविरोधिनो हेतवो न विद्यन्ते, तथापि मा गाः इति वचनं प्रभुत्वेन विना न घटते ; इति प्रभुत्वेन गमनस्य आक्षिप्तत्वात् असौ प्रभुत्वाक्षेपः ॥

जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा कान्त स्वावस्था तु निवेदिता ॥
१३९ ॥

असावनादराक्षेपो यदनादरवद्वचः ।
प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥ १४० ॥

*B.* जीवितेति । गच्छ वा तिष्ठ वा इत्यनादरसहितं वचनं प्रियगमनं निरुणद्धि इत्यसौ अनादराक्षेपः ॥

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १४१॥

इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना ।
स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते ॥
१४२ ॥

*B.* गच्छेति । ममापि जन्म तत्रैव भूयात् इति मरणं सूचयन्त्या आशिषा कान्तयात्मानिरोधात् अयम् आशीर्वचनाक्षेपः ॥

यदि सत्यैव ते यात्रा काप्यन्या मृग्यतां[1] त्वया ।
अहमद्यैव रुद्धास्मि रन्ध्रापेक्षेण[2] मृत्युना ॥ १४३ ॥

इत्येष परुषाक्षेपः परुषाक्षरपूर्वकम् ।
कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया ॥ १४४ ॥

गन्ता चेद्गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः ।
आर्तबन्धुमुखोद्गीर्णाः प्रयाणपरिपन्थिनः[3] ॥१४५॥

साचिव्याक्षेप एवैष यदत्र प्रतिषिध्यते ।
प्रियप्रयाणं साचिव्यं कुर्वत्येवानुरक्तया ॥१४६॥

*B.* गन्तेति । साचिव्यं साहाय्यम् । साचिव्यानुज्ञाक्षेपयोः अयं भेदः—साचिव्याक्षेपे नियोगपूर्वः स्यात् अभ्युपगमः, अनुज्ञाक्षेपे तु अभ्युपगममात्रम्, इति ॥

---

१. 'काप्यनुग्राह्यताम्' इति पा०। २. 'रन्ध्रान्वेषेण' इति पा०। ३. 'प्रतिबन्धिनः' इति पा०।

गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी ।
निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम्॥
१४७ ॥

यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि ।
विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात्[1] ॥ १४८ ॥

*B.* यत्नाक्षेप इति । यत्नाक्षेपः यत्ननिषेधः । अनभिमते कान्तगमनाभ्युपगमे कृतस्य यत्नस्य, मा गाः इति अनभ्युपगमकथनात् निषेधो जायते, इत्ययं यत्नाक्षेपः । विपरीतफलोत्पत्तिः मा गाः इति वचनम् । यत्नस्य आनर्थक्यं वैयर्थ्यं निषेधः इति यावत् ॥

क्षणदर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः ।
प्रेम्णः प्रयाणं ते ब्रूहि मया तस्येष्टमिष्यते ॥
१४९ ॥

[2]अयं परवशाक्षेपो यत् प्रेमपरतन्त्रया ।
तया निषिध्यते यात्रा तस्यार्थस्योपसूचनात्[3] ॥
१५० ॥

---

१. 'सूचनात्' इति पा० । २. 'सोऽयं' इति पा० । ३. 'उपदर्शनात्' इति पा० ।

*B*. क्षणमिति । त्वद्दर्शने क्षणमात्रं विघातभूतं पक्ष्मस्पन्दमपि न सहते यत्, यस्य अहम् अधीना प्रेम्णः, तस्य यदिष्टं, मया तदिष्यते; तस्य ते प्रयाणं ब्रूहि—इति वदन्त्या, प्रेमपारतन्त्र्यं च आत्मनः, प्रेम्णः स्वभावश्च यात्राप्रतिबन्धी, सूचितः; इति पारवश्यद्वारेण आक्षिप्तत्वात् अयं परवशाक्षेपः ॥

सहिष्ये विरहं नाथ देह्यदृश्याञ्जनं मम ।
यदक्तनेत्रां कन्दर्पः प्रहर्ता मां न पश्यति ॥१५१॥

दुष्करं जीवनोपायमुपन्यस्योपरुध्यते ।
पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम् ॥१५२॥

मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्छिता ।
बुद्ध्वा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान् ॥
१५३ ॥

इति तत्कालसम्भूतमूर्छयाक्षिप्यते गतिः ।
कान्तस्य कातराक्ष्या यन्मूर्छाक्षेपः स ईदृशः ॥
१५४ ॥

---

१. 'प्रियाश्लिष्टा' इति पा०।

प्रवृत्तैव प्रयामीति वाणी वल्लभ ते मुखात् ।
अयतापि त्वयेदानीं मन्दप्रेम्णा ममास्ति किम् ॥
१५५ ॥

रोषाक्षेपोऽयमुद्रिक्तस्नेहनिर्यन्त्रितात्मना ।
संरब्धया प्रियारब्धं प्रयाणं यन्निषिध्यते[1] ॥१५६॥

*B*. प्रवृत्तैवेति । अगच्छतापि मन्दप्रियेण त्वया मम किम् इति सम्बन्धः ॥

नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम् ।
त्वद्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥
१५७ ॥

असावनुक्रोशाक्षेपः सानुक्रोशमिवोत्पले ।
व्यावर्त्य कर्म तद्योग्यं शोच्यावस्थोपवर्णनात् ॥
१५८ ॥

*B*. नाघ्रातमिति । अनुक्रोशो नाम परदुरवस्थादर्शनादिजनितदाक्षिण्यम् । अनुक्रोशसहितम् आक्षेपवचनम् अनुक्रोशा-

१. 'वार्यते' इति पा०।

क्षेपः । अत्र सानुक्रोशम् उत्पलस्य शोच्यावस्थां दर्शयन् तद्योग्यं कर्म व्यावर्तयतीति अनुक्रोशाक्षेपः ॥

अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥१५९॥

इति मुख्येन्दुराक्षिप्तो गुणान् गौणेन्दुवर्तिनः ।
तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः ॥ १६० ॥

*B.* अमृतात्मनीति । मुख्ये पक्षे—अमृतात्मनि सुधामये, पद्मानां द्वेष्टरि पद्मानां सङ्कोचयितरि. स्निग्धतारके अनुरक्तदाक्षायणीके । गौणपक्षे—आनन्दजनने पद्मसन्निभे स्निग्धकनीनिके। एवं चन्द्रसमे तव मुखे सति, न चन्द्रमसा कार्यम्; इति श्लेषकथनेन आक्षेपात् श्लिष्टाक्षेपः ॥

अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्जिता ।
न तपः सञ्चितं किञ्चिद्गतञ्च सकलं वयः॥१६१॥

असावनुशयाक्षेपो यस्मादनुशयोत्तरम् ।
अर्थार्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा ॥ १६२॥

*B.* अर्थेनेति । अनुशयः पश्चात्तापः । अभ्यधिकानुशयम् अर्थार्जनादेर्निषेधः क्षीणायुषा केनापि दर्शितः इति अयम् अनुशयाक्षेपः ॥

किमयं शरदम्भोदः किं वा हंसकदम्बकम् ।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥ १६३ ॥
इत्ययं संशयाक्षेपः संशयो यन्निवार्यते ।
धर्मेण हंससुलभेनास्पृष्टघनजातिना ॥ १६४ ॥

*B.* इतीति । संशयस्य आक्षेपः संशयाक्षेपः ॥

चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न तृप्यति ।
कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥१६५॥
अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवार्यते ।
विस्मयोऽर्थान्तरस्येह दर्शनात् तत्सधर्मणः॥१६६॥

*B.* अयमिति । अर्थान्तरमुपन्यस्य प्रस्तुतसम्बान्धिनो विस्मयस्य आक्षेपात् अयम् अर्थान्तराक्षेपः ॥

न स्तूयसे नरेन्द्र त्वं ददासीति कदाचन ।

स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥१६७॥

इत्येवमादिराक्षेपो हेत्वाक्षेप इति स्मृतः ।

अनयैव दिशान्योऽपि विकल्पः शक्य ऊहितुम् ॥
१६८ ॥

*B*. नेति । वर्णनीयस्यं त्यागाविषया स्तुतिः हेतुमुखेन आक्षिप्ता इति हेत्वाक्षेपः । आदिशब्देन ईदृशाः अन्येऽपि हेत्वाक्षेपतया गृह्यन्ते । आक्षेपविकल्पा अन्येऽपि दर्शितेन मार्गेण ज्ञातव्याः इति आह—अनयैवेति ॥

इति आक्षेपचक्रम्

---

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन ।

तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥
१६९ ॥

*A*. अर्थान्तरन्यासं लक्षयति—ज्ञेय इति । विवक्षितं कञ्चिदर्थम् उपन्यस्य तत्साधनक्षमस्य वस्त्वन्तरस्य न्यासः अर्थान्तरन्यासः ॥

*B*. अर्थान्तरन्यासालङ्कारमाह—ज्ञेय इति । पूर्वम् एकं साध-

यितुम् इष्टम् उक्त्वा तत्साधनार्थं वस्त्वन्तरकथनम् अर्थान्तरन्यासलक्षणम् ॥

**विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान् ।**
**अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्ययः ॥**
१७० ॥

**इत्येवमादयो भेदाः प्रयोगेष्वस्य[1] लक्षिताः ।**
**उदाहरणमालैषां रूपव्यक्तौ निगद्यते[2] ॥ १७१ ॥**

*A.* विश्वेति । सः विश्वव्यापी विशेषस्थः इत्यादिभिः प्रकारैः अष्टप्रकारः ॥

*B.* पृथगर्थनामवशेन तद्भेदान् दर्शयति—विश्वेति । विश्वव्यापी निखिलपदार्थानुगतः । विशेषस्थः कस्मिंश्चिदेव पदार्थे व्यवस्थितः । श्लेषाविद्धः वक्ष्यमाणश्लेषालङ्कारलक्षणोपेतः । विरोधवान् असङ्गतिमान् । अयुक्तकारी स्वस्वभावविरुद्धार्थकारी । युक्तात्मा स्वस्वभावयोग्यार्थः । युक्तायुक्तः स्वस्वभावविरुद्धाविरुद्धार्थोपेतः । विपर्ययः अन्यभावापत्तिः । क्रमेण एषाम् उक्तप्रकाराः भेदाः सर्वेऽपि अस्य प्रयोगेषु काव्यनाटकादिषु लक्षणीयाः ॥

---

१. ‘ विकल्पेषु ’ इति पा० । २. ‘निदर्श्यते’ इति पा० ।

**भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।**
**पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥**
**१७२ ॥**

*A*. भगवन्ताविति । नियतिः केन वा लङ्घ्यते ? विधिः सर्वैः अनुवर्तनीयः, इति सर्वेषामपि, अनिष्टेषु प्रस्तुतेषु, शासनसमर्थः इति असौ विश्वव्यापी ॥

*B*. एषां भेदव्यक्त्यै उदाहरणान्याह । तत्र प्रथमं विश्वव्याप्युदाहरणम्—भगवन्तौ इति । अस्तं विनाशम् एकत्र, अन्यत्र अस्ताचलं, गच्छत एव इति साध्यम् । नियतिः केन लङ्घ्यते इति अर्थान्तरमेतत् । ब्रह्मादिकीटपर्यन्तानां सर्वेषां विनाशनिष्ठता नियतिर्नाम ॥

**पयोमुचः परीतापं हरन्त्येवं शरीरिणाम् ।**
**नन्वात्मलाभो महतां परदुःखोपशान्तये ॥१७३॥**

*A*. पयोमुच इति । अत्र महताम् आत्मलाभः इति महदुपादानात् विशेषस्थः । 'अवाप्तव्यान्यवाप्तानि यस्य सर्वाणि देहिनः । परोपकारव्यसनी स महानभिधीयते'—इति पयोमुचां महत्त्वम् । अथवा महान् उदारः ॥

---

१. 'हरन्त्येते' इति पा० ।

*B*. परदुःखोपशान्तिहेतुः शरीरपरिग्रहो महतामेव इति विशेषस्थोऽयम् ॥

**उत्पादयति लोकस्य प्रीतिं दक्षिण[1]मारुतः ।**

**ननु दाक्षिण्यसम्पन्नः सर्वस्य भवति प्रियः[2]॥१७४॥**

*A*. उत्पादयतीति । दाक्षिण्यं दक्षिणादिग्भवत्वम्, अन्यच्छन्दानुवर्तित्वं च, इति श्लेषाविद्धत्वम् ; 'देयभेदे तु दाक्षिणा, त्रिष्वर्कसरलावामेष्वन्यच्छन्दानुवर्तिनि'–इति ॥

*B*. उत्पादयतीति । दाक्षिण्यशब्दस्य स्वाभाविकार्थाः बहवः —दक्षिणदिक्सम्भवो, दाक्षिण्ययुक्तः, समर्थश्च । तेषु अन्यतमः साध्यतया निर्दिष्टः, साधनभूतेन अन्यतमेन साध्यते, इति श्लेषाविद्धः ॥

**जगदानन्द[3]यत्येष मलिनोऽपि निशाकरः ।**

**अनुगृह्णाति हि परान् सदोषोऽपि द्विजेश्वरः॥१७५॥**

*A*. जगदिति । द्विजेश्वरः ब्राह्मणः चन्द्रश्च । द्विजराजः सदोषोऽपि अनुगृह्णाति इति विरोधः ॥

*B* जगदिति विरोधवतः उदाहरणम् । द्विजेश्वरः इति अर्थान्तरन्यासः । सदोषोऽपि ब्राह्मणमुख्यः परान् अनुगृह्णाति ॥

---

१. 'मलय' इति पा० । २. 'सर्वस्यावहति प्रियम्' इति पा० । ३. 'आह्लादयति' इति पा० ।

मधुपानकलात्कण्ठान्निर्गतोऽप्यलिनां ध्वनिः ।
कटुर्भवति कर्णस्य कामिनां पापमीदृशम् ॥ १७६॥

*A.* मध्विति । अलिनां मधुपानेन कलात् कण्ठात् निर्गतः श्रोत्रहारी अपि ध्वनिः कामिनां विरहिणां कर्णस्य कटुः भवति। पापम् अयुक्तं करोति हि ॥

*B.* मध्विति । पापोपहतानां सर्वमपि विपर्यस्यते इति अर्थान्तरस्य प्रदर्शितत्वात् अयुक्तकारिणः उदाहरणम् इदम् ॥

अयं मम दहत्यङ्गमम्भोजदलसंस्तरः ।
हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते ॥ १७७ ॥

*A.* अयमिति । हुताशनप्रतिनिधिः—अम्भोजदलप्रस्तरस्य पीतवर्णतया हुताशनसादृश्यम् । इति युक्तकारी ॥

*B.* अयमिति । अयम् अम्भोजदलसंस्तरः मां दहतीति शीतलस्य दाहस्वभावं प्रकृत्य हुताशनप्रतिनिधिः हुताशनसदृशो दाहात्मा भवतीति युज्यते । इति युक्तात्मनः उदाहरणम् ॥

क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम् ।
मलिनाचरितं कर्म सुरभेर्नन्वसाम्प्रतम् ॥ १७८ ॥

*A*. क्षिणोत्विति । सुरभिः सौम्यो वसन्तश्च । मलिनस्य युज्यते परपीडनम्, न सौम्यस्य इति, युक्तायुक्तत्वम् ॥

*B*. क्षिणोत्विति । मलिनः इन्दुः निकृष्टश्च । सुरभिः वसन्तः सत्पुरुषश्च । विरोधवति युक्तात्मनि युक्तायुक्ते च अर्थान्तरन्यासे श्लेषानुबन्धे सत्यपि, प्रागुक्तन्यायेन न तद्व्यपदेशः ॥

**कुमुदान्यपि दाहाय किमङ्ग कमलाकरः ।**
**न हीन्दुगृह्येषूग्रेषु सूर्यगृह्यो मृदुर्भवेत् ॥ १७९ ॥**

*A*. कुमुदानीति । किमङ्ग किं पुनः । कुमुदानां शीतलचन्द्रपक्ष्यत्वात् तापकरत्वम् अयुक्तम्; कमलाकरस्य उष्णकरपक्ष्यत्वात् तापकरत्वं युक्तम् । इति अयुक्तयुक्तरूपः अर्थान्तरन्यासः ॥

*B*. कुमुदानीति । शीतगुणयुक्तस्य तापकरणं विपर्ययो भवति । एनम् अर्थम् उद्दिश्य अर्थान्तरन्यासः अभिहितः । इन्दुपक्षेषु उग्रेषु सत्सु, सूर्यपक्षा उग्रप्रायाः किल मृदुत्वेन समुपेता भवन्ति, इति विपर्ययार्थान्तरन्यासस्य उदाहरणम् ॥

इत्यर्थान्तरन्यासचक्रम्

**शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।**
**तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते[1] ॥ १८० ॥**

1. ‘ उच्यते ’ इति पा० ।

*A*. व्यतिरेकं लक्षयति—शब्देति ॥

*B*. व्यतिरेकालङ्कारलक्षणमाह—शब्देति । वाचकशब्देन वा सामर्थ्येन वा द्वयोः पदार्थयोः साम्ये परिज्ञाते सति भेदकथनं व्यतिरेको नाम ॥

धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः ।
गुणैस्तुल्योऽपि भेदस्तु वपुषैवेदृशेन ते ॥ १८१ ॥

इत्येकव्यतिरेकोऽयं धर्मेणैकत्रवर्तिना ।
प्रतीतिविषयप्राप्तेर्भेदस्योभयवर्तिनः ॥ १८२ ॥

*A*. एकव्यतिरेकं दर्शयति—धैर्येति । एकव्यतिरेकं व्याचष्टे—इतीति ॥

*B*. उदाहरति—धैर्येति । प्रतीतिविषयप्राप्तेः प्रतीतेः विषयतया प्राप्तेः ज्ञातत्वात् इत्यर्थः । एकत्र पुरुषे वर्तिना वपुराख्येन धर्मेण व्यतिरेकतया स्वीकृतेन उभयवर्तिनो भेदस्य प्रतीतिप्राप्तेर्हेतोः एकव्यतिरेकोऽयम् ॥

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।
असावञ्जनसङ्काशस्त्वं तु चामीकरद्युतिः॥ १८३॥

उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ ।
कार्ष्ण्यं पिशङ्गता चोभौ यत् पृथग्दर्शिताविह[1] ॥
१८४ ॥

*A*. उभयव्यतिरेकं दर्शयति—अभिन्नेति । उभयव्यतिरेकं व्याचष्टे—उभयेति ॥

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
अयं[2] तु युवयोर्भेदः स जडात्मा पटुर्भवान्॥ १८५॥
स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम् ।
साक्षेपश्च सहेतुश्च दर्श्यंते[3] तदपि द्वयम् ॥ १८६ ॥

*A*. सश्लेषव्यतिरेकं दर्शयति—त्वमिति । दुर्वारः दुर्धर्षः; महासत्त्वः महाव्यवसायः ; सतेजाः—परिभवासहत्वं तेजः उच्यते, तद्वान्—इति वर्णनीयपक्षे । दुर्वारः दुष्टजलप्रदः,. दुष्ट वाः जलं राति इति, रा दाने इत्यस्मात् कप्रत्ययः ; महासत्त्वः ग्राहादिमान् ; सतेजाः बाडबसहितः—इति समुद्रपक्षे । जलात्मा जलरूपः, जडस्वभावश्च । एषः उभयव्यतिरेकोऽपि सश्लेषः इति पूर्वस्मात् भेदः । पूर्वस्मात् अस्य भेदं व्याचष्टे—स इति । व्यतिरेकान्तरे कथयति—साक्षेपश्चेति ॥

---

१. 'पृथक्त्वेन दर्शितौ' इति पा० । २. 'इयता ' इति पा० । ३. 'दृश्यते' इति पा० ।

*B.* त्वमिति । श्लेषरूपेण साम्यं श्लेषरूपेण भेदश्च कथितः इति सश्लेष एषः । दुर्वारौ—एकत्र परैः वारयितुम् अशक्यः, अन्यत्र कुत्सितसलिलसमूहः । महासत्त्वौ—सत्त्वं क्वचित् बलम् अन्यत्र तिमिङ्गिलादि । सतेजसौ—तेजः दर्पः, अन्यत्र बाडबः । जडात्मा—सलिलात्मा, अन्यत्र भ्रान्तप्रकृतिश्च । साक्षेपश्चेति—साक्षेपव्यतिरेकश्च, सहेतुव्यतिरेकश्च । आक्षेपः प्रतिषेधोक्तिः, हेतुः कारणम्; ताभ्यां सह वर्तमानौ साक्षेपसहेतुकौ प्रदर्श्येते ॥

**स्थितिमानपि धीरोऽपि रत्नानामाकरोऽपि सन् ।**
**तव कक्ष्यां न यात्येव मलिनो मकरालयः ॥ १८७ ॥**

**वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम् ।**
**भर्तृभावाद्भुजङ्गानां शेषस्त्वत्तो निकृष्यते॥१८८॥**

*A.* तत्र साक्षेपव्यतिरेकं दर्शयति—स्थितिमानपीति । सहेतुव्यतिरेकं दर्शयति—वहन्नपीति ॥

*B.* स्थितिमानपीति—मलिनः समुद्रः त्वत्समो न भवतीति अयमाक्षेपसहितो व्यतिरेकः । वहन्निति—भुजङ्गः सर्पो धूर्तश्च; भुजङ्गानां भर्तृभावात् निकृष्यते शेष इति सहेतुरयं व्यतिरेकः ॥

शब्दोपादानसादृश्यव्यतिरेकोऽयमीदृशः ।
प्रतीयमानसादृश्योऽप्यस्ति सोऽप्यभिधीयते[1] ॥
१८९ ॥

*A*. एवं शब्दोपात्तसादृश्यव्यतिरेको दर्शितः । प्रतीयमान-सादृश्यं दर्शयामः इत्याह—शब्देति ॥

*B*. शब्देति। अत्र पूर्वार्धेन उक्ता व्यतिरेकाः शब्दोपात्तसादृश्ये भवन्ति इत्याह; उत्तरार्धेन प्रतीयमानसादृश्येऽपि सन्तः प्रदर्श्यन्ते इत्याह ॥

त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदा ।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥१९०॥

*A*. त्वदिति । अत्र फुल्लं सुरभिगन्धि चेति सदृशधर्मौ प्रतीयेते ॥

अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम् ।
इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥१९१॥

---

१. ' सोऽन्वविधीयते ' इति पा० ।

*A.* अभ्रूविलासमिति । अप्रस्तुतमृगेक्षणे वर्णनीयनयने च दीर्घत्वं विशालत्वं चेति सदृशधर्मौ प्रतीयमानौ ॥

**पूर्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम् ।**
**सदृशव्यतिरेकश्च पुनरन्यः प्रदर्श्यते ॥ १९२ ॥**

*A.* पूर्वस्मिन्निति । व्यतिरेकान्तरं लक्षयाति—सदृशेति । सदृशयोः पदार्थयोः प्रदर्श्यमानो व्यतिरेकः, परस्परसादृश्याभ्यां धर्माभ्याम् इत्यर्थः ॥

*B.* पूर्वस्मिन्निति । सदृशवस्तुकथनेन भेदः प्रतिपादितः इति सदृशव्यतिरेकः । सदृशव्यतिरेको द्विधा भवति । शब्दोपात्तसादृश्ययोः शब्दोपात्तवस्तुकथनेन प्रतिपादितः, प्रतीयमानसादृश्ययोः प्रतीयमानसादृश्यवस्तुकथनेन प्रतिपादितश्च । सदृशव्यतिरेकस्य द्वैविध्यम् एतत् प्रतीयमानेत्यादिना श्लोकेन पूर्वत्रेत्यादिना च प्रतिपादयिष्यति ॥

**त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी ।**
**भ्रमद्भ्रमरमम्भोजं लोलनेत्रं मुखं तु ते ॥ १९३ ॥**

*A.* त्वदिति । अत्र फुल्ले सुरभिगन्धिनी इति अभिधीयमानसादृश्ययोः मुखपुण्डरीकयोः भ्रमदिति लोलेति च अभिधीयमा-

नसादृश्याभ्यां भ्रमरदृष्टिभ्यां व्यतिरेकः; इति अभिधीयमानसादृश्यव्यतिरेकः ॥

*B*. अनयोः उदाहरणमाह—त्वदिति । सुरभिगन्धित्वविकसितत्वे समानधर्मौ मुखसरसिजयोरुक्तौ । पुनः तयोरेव लोलेन लोचनेन भ्रमता च भ्रमरेण परस्परसदृशेन भेदः उक्तः । इति अभिधीयमानसादृश्यः सदृशव्यतिरेकः ॥

**चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।**
**नभो नक्षत्रमालीदमुत्फुल्लकुमुदं पयः॥ १९४॥**

*A*. प्रतीयमानसादृश्यं व्यतिरेकं दर्शयति—चन्द्र इति । पूर्वार्धे चन्द्रहंसयोः प्रतीतशुद्धयोः उत्तरार्धे प्रतीयमानसौक्ष्म्यादिसाम्यधर्मयोः वियदम्भसोश्च, वियदम्भोभ्यां नक्षत्रकुमुदाभ्यां च प्रतीयमानसादृश्याभ्यां, व्यतिरेकः कृतः ॥

*B*. चन्द्र इति । प्रतीयमानसाम्यौ चन्द्रहंसौ भेदकौ इति सदृशव्यतिरेकः द्वितीयः । नभो नक्षत्रमालीति सदृशव्यतिरेकस्य प्रतीयमानसादृश्याश्रितस्य द्वितीयम् उदाहरणम् । अत्र उदाहरणद्वयं प्रदर्शयतः ईदृशम् अन्यदपि ऊह्यम् इत्यभिप्रायः ॥

**प्रतीयमानसौक्ष्म्यादिसाम्ययोर्वियदम्भसोः ।**

कृतः प्रतीतशुद्ध्योश्च भेदोऽस्मिन् चन्द्रहंसयोः ॥
१९५ ॥

पूर्वत्र शब्दवत्साम्यमुभयत्रापि भेदकम् ।
भृङ्गनेत्रादि तुल्यं तत् सदृशव्यतिरेकता ॥१९६॥

*B.* व्याकृतम् अर्थम् अनेन प्रतिपादयति प्रतीयमानेति । पूर्वं निर्दिष्टेन चन्द्रोऽयमिति श्लोकेन प्रतीयमानसौक्ष्म्यादिसाम्ययोः नभस्सलिलयोः भेदः प्रतीयमानवैमल्यौ चन्द्रहंसौ अधिकृत्य दर्शितः। पूर्वत्र—शब्दोपात्तसादृश्ये; इति शब्दवत्साम्यम्। त्वन्मुखमित्यादौ उभयत्रापि—मुखे पुण्डरीके च—फुल्लत्वसुरभिगन्धित्वे साधारणे; भेदके तु भृङ्गनेत्रे, तद्धर्मौ भ्रमणलौल्ये तुल्ये, इत्याह—भेदकं भृङ्गेति । आदिशब्देन भ्रमणलौल्ये गृह्येते । उपसंहरति—तत् सदृशव्यतिरेकता इति ॥

अरत्नालोकसंहार्यमहार्यं[1] सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ १९७ ॥

सजातिव्यतिरेकोऽयं तमोजातेरिदं तमः ।
दृष्टिरोधितया तुल्यं भिन्नमन्यैरदर्शि यत् ।
१९८ ॥

---

१. ‘अवार्यम्’ इति पा० ।

*A.* सजातिव्यतिरेकं दर्शयति—अरत्नेति । यूनां तमः अज्ञानरूपं दृष्टिरोधकरं यौवनप्रभवत्वारत्नालोकसंहार्यत्वसूर्यरश्म्य-हार्यत्वैः बाह्यतमोजातेः भिन्नम् इति सजातिव्यतिरेकः ॥

*B.* अरत्नेति । दृष्टिरोधितया तमोजातितुल्यस्य यौवनप्रभवस्य तमसः रत्नालोकसंहार्यत्वाद्यभावात् भेदः प्रतिपादित इति सजातिव्यतिरेकः ॥

इति व्यतिरेकचक्रम्

---

**प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित्कारणान्तरम् ।**
**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥**
१९९ ॥

*A.* विभावनां लक्षयति—प्रसिद्धेति ॥

*B.* विभावनालङ्कारमाह—प्रसिद्धेति । प्रसिद्धस्य, जनकतया प्रसिद्धस्य वा व्यापकभूतस्य वा, हेतोर्निवर्तनेऽपि, तत्कार्यस्य यत्र यत्किञ्चित् कारणान्तरं विभाव्यते–सा एका विभावना । यत्र च प्रसिद्धहेतोः व्यावृत्त्या तत्कार्यस्य स्वाभाविकत्वं विभाव्यते –सा चैका विभावना । सा चतुर्धा—कालकृता नियतद्रव्यकृता अनियतद्रव्यकृता नियतानियतद्रव्यकृता चेति ॥

अपीतक्षीबकादम्बमसम्मृष्टामलाम्बरम् ।
अप्रसादितशुद्धाम्बु[1] जगदासीन्मनोहरम् ॥२००॥

अनाञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता ।
अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ॥ २०१ ॥

*A.* विभावनामुदाहरति—अपीतेतिद्वयेन ॥

*B.* कालकृतस्य उदाहरणमाह—अपीतेति । अत्र कादम्बर्याद्याश्रितस्य क्षीबत्वादेः प्रसिद्धहेतुः पीतत्वादिर्व्यावर्त्यते ; हेत्वन्तरञ्च शरत्प्रभावः विभाव्यते । इत्यसौ कालकृता कारणान्तरविभावना । अनञ्जितेति—अत्र दृष्ट्याद्याश्रयस्य असितत्वादेः अञ्जितत्वादिः प्रसिद्धो हेतुः व्यावर्तितः ; स्वभावसिद्धं च असितत्वादि दृष्ट्यादेः विभाव्यते । इति स्वाभाविकविभावना ॥

यदपीतादिजन्यं स्यात् क्षीबत्वाद्यन्यहेतुजम् ।
अहेतुकं च तस्येह विवक्षेत्यविरुद्धता ॥ २०२॥

*A.* यदिति । क्षीबत्वादिहेतोः असितत्वादिहेतोश्च इयान् भेदः—पीतादिकारणरहितं क्षीबत्वादि शरत्प्रभावजम्; अञ्जि-

---

१. ‘ सूक्ष्माम्बु ’ इति पा० ।

तत्वादिकारणराहितम् असितत्वादि, कारणान्तरराहितम्; अत एव अहेतुजं स्वाभाविकं च । यत् यस्मात्, तस्य कारणान्तरस्य स्वाभाविकत्वस्य च विवक्षा, इति न विरोधः ॥

*B*. व्याख्यातमर्थमाह—यदिति । इमे शुद्धे ॥

**वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम् ।**
**अकारणरिपुश्चन्द्रो निर्निमित्तासुहृत्स्मरः॥२०३॥**

**निसर्गादिपदैरत्र हेतुः साक्षान्निवर्तितः ।**
**उक्तं च सुरभित्वादिफलं तत् सा विभावना॥२०४॥**

*A*. वक्त्रमिति । तस्याः वक्त्रं निसर्गसुरभि स्वभावसुरभि; वपुः अव्याजसुन्दरं स्वभावरमणीयम्; अपि च चन्द्रः अकारणरिपुः विरोधाभावेऽपि रिपुः भवति; स्मरः निर्निमित्तासुहृच्च भवति । अत्र अपीतत्वादिवत् अनञ्जितत्वादिवत् च प्रसिद्धहेतुः न व्यावर्तितः। कथं तर्हि विभावनात्वम् इति चेत्, तत्राह—निसर्गादिपदैरिति । साक्षात् हेतुः प्रसिद्धहेतुः कर्पूरभक्षणादिः व्यावर्त्यते इति विभावनैव इयम् । अत्र पूर्वार्धे स्वाभाविकविभावने । उत्तरार्धे कारणान्तरे विरहः समागमश्च ॥

*B*. मिश्रामाह—वक्त्रमिति । अत्र उत्तरयोः विरहसमागमादिकारणान्तरविभावनयोः स्वाभाविकीभ्यां प्राग्विभावनाभ्याम्

अयथासङ्ख्येन तद्गतो विशेष उक्तः । सेयं विभावनयैव विभावनायाः उपकृतत्वात् मिश्रा भवति ॥

इति विभावनाचक्रम्

---

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ।
उक्तिः संक्षिप्त[1]रूपत्वात् सा समासोक्तिरिष्यते ॥ २०५॥

*A*. समासोक्तिं लक्षयति—वस्त्विति । कञ्चिदर्थं हृदये निधाय तत्तुल्यस्य अन्यस्य वस्तुनः कथनं समासोक्तिः । निर्वचनं करोति—संक्षिप्तरूपत्वादिति । उभयार्थद्योतकत्वात् इत्यर्थः ॥

*B*. समासालङ्कारमाह—वस्त्विति ॥

पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुट्मलम् ॥ २०६ ॥

इति प्रौढाङ्गनाबद्धरतिलीलस्य रागिणः ।
कस्याश्चिदपि बालायामिच्छावृत्तिर्विभाव्यते ॥ २०७॥

---

१. 'संक्षेप' इति पा० ।

*A.* समासोक्तिः तुल्यसंविधाना तुल्यविशेषणा तुल्यातुल्यविशेषणा चेति त्रिविधा । तत्र तुल्यसंविधानाम् उदाहरति—पिबन्निति । एतद्व्याचष्टे—इतीति ॥

**विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।**
**अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥२०८॥**

*A.* अपरे विभजते—विशेष्येति ॥

*B.* समासालङ्कारस्य भेदं दर्शयति—विशेष्येति ॥

**रूढमूलः फलभरैः पुष्णन्ननिशमर्थिनः ।**
**सान्द्रच्छायो महावृक्षः सोऽयमासादितो मया ॥**
**२०९ ॥**

**अनल्पविटपाभोगः फलपुष्पसमृद्धिमान् ।**
**सुच्छायः स्थैर्यवान् दैवादेष लब्धो मया द्रुमः ॥**
**२१० ॥**

**उभयत्र पुमान् कश्चिद्वृक्षत्वेनोपवर्णितः ।**
**सर्वे साधारणा धर्माः पूर्वत्रान्यत्र तु द्वयम् ॥**
**२११ ॥**

*A.* तुल्यविशेषणामुदाहरति—रूढमूल इति । रूढमूलः क्षेत्रादिमान्; फलभरैः अभीप्सितैः अर्थैः; सान्द्रच्छायः विशालनिवासः; एवं महापुरुषः अभिप्रेतः। वृक्षविशेषणानि हि प्रकटानि। तुल्यातुल्यविशेषणामुदाहरति—अनल्पेति । अनल्पविटपाभोगः इत्यनेन पुत्रादिसम्पात्तिः द्योतिता; फलपुष्पसमृद्धिमानिति अर्थाप्तिः द्योतिता; न तु अभिहिता । सुच्छायः स्थैर्यवान् इति द्वयम् उभयविशेषणम् । पूर्वश्लोकौ व्याचष्टे—उभयत्रेति ॥

*B.* उदाहरणे—रूढेति अनल्पेति च । सुच्छायः स्थैर्यवान् इति धर्मद्वयस्यैव साधारण्यम् ॥

**निवृत्तव्यालसंसर्गो निसर्गमधुराशयः ।**

**अयमम्भोनिधिः कष्टं कालेन परिशुष्यति॥२१२॥**

**इत्यपूर्वसमासोक्तिः पूर्वधर्मनिवर्तनात् ।**

**समुद्रेण समानस्य पुंसो व्यापत्तिसूचनात्॥२१३॥**

*A.* निवृत्तेति । निवृत्तव्यालसंसर्गः दुर्जनसम्बन्धरहितः । पूर्वं व्याचष्टे—इत्यपूर्वेति ॥

*B.* निवृत्तेति । आशेरते अस्मिन् मत्स्यादयः इति आशयः जलम् । समुद्रस्य व्यालसंसर्गः भुजङ्गसंसर्गः लवणाशयत्वं च

प्रसिद्धो धर्मः । तस्य तौ नित्यौ व्यालसंसर्गराहित्यं मधुराशयत्वं च धर्मौ आरोप्य, तत्समानस्य पुंसो विपत्तिसूचनात्, इयम् अपूर्व-समासोक्तिः ॥

इति समासोक्तिचक्रम्

**विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।**
**असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा॥२१४॥**

*A.* अतिशयोक्तिं लक्षयति—विवक्षेति । कस्यचित् पदार्थस्य गुणप्रकर्षविवक्षा लोकातिशायिनी अतिशयोक्तिः ॥

*B.* अतिशयालङ्कारमाह—विवक्षेति । लावण्यादेः विशेषस्य लोकसीमातिलङ्घिनीं विवक्षाम् अतिशयोक्तिं विदुः ॥

**मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥**
**२१५॥**

*A.* माल्लिकेति । मालभारिण्यः इत्यत्र 'इष्टकेषीकामालानां चिततूलभारिषु' इति मालाशब्दस्य ह्रस्वः । अतिशयोक्तयः स्पष्टाः ॥

*B.* उदाहरति—मल्लिकेति ॥

चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तया ।
संशयातिशयादीनां व्यक्त्यै किञ्चिन्निदर्श्यते ॥ २१६ ॥

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव ।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते ॥ २१७ ॥

*B.* स्तनयोरिति । अस्तिनास्तीतिसन्देहास्पदत्वकथनेन प्रियायाः मध्यतानवस्य लोकसीमातिलङ्घित्वं विवक्षितम् । इति सन्देहमुखेन अतिशयकथनात् अयं संशयातिशयः ॥

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ २१८ ॥

*B.* निर्णेतुमिति । वर्णनीयजघनादूर्ध्वं मध्यं नाम किञ्चिदस्तीति पयोधरास्थितिमूलया अर्थापत्त्या निर्णीयते इति लोकसीमातिगतस्य मध्यतानवस्य विवक्षितस्य निर्णयमुखेन अभिधानात् अयं निर्णयातिशयः ॥

अहो विशालं भूपाल भुवनत्रितयोदरम् ।

**माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥२१९॥**

*B*. अहो इति। अत्र यशोराशेः अशक्यमानस्य, अतिशयोक्त्या विशेषविवक्षया, तेन भुवनम् आकीर्णमिति आशङ्क्यते। सोऽयं महत्त्वातिशय उच्यते॥

**अलङ्कारान्तराणामप्येकमाहुः परायणम्।**
**वागीशमहितामुक्तिमिमामतिशयाह्वयाम्॥२२०॥**

*B*. अलङ्कारेति। अलङ्कारान्तराणामपि एष उपकारी भवति। अतिशयजननत्वं विना भूषणता न स्यात् इत्यभिप्रायः॥

इति अतिशयोक्तिचक्रम्

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा॥२२१॥**

*A*. उत्प्रेक्षां लक्षयति—अन्यथैवेति। चेतनस्य अचेतनस्य वा प्रकारान्तरेण जाता वृत्तिः, प्रकारान्तरेण यत्कविना कथ्यते सा उत्प्रेक्षा॥

*B*. उत्प्रेक्षालङ्कारमाह—अन्यथैवेति। इतरस्य अचेतनस्य; अन्यथा पूर्वावस्थावैपरीत्येन। स्वप्रतिभासो यत्र वस्तुनि स्वाभाविकत्वेन आरोप्यते सा उत्प्रेक्षा॥

मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः ।
मन्ये मार्ताण्डगृह्याणि पद्मान्युद्धर्तुमुद्यतः॥२२२॥

स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम् ।
तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ॥२२३॥

*A.* मध्यन्दिनेत्यादिना उत्प्रेक्षितविषयस्य उत्प्रेक्षात्वं दर्शयाति—स्नातुमिति ॥

*B.* उदाहरणमाह—मध्यान्दिनेति । पूर्वस्य व्याख्या उत्तरः श्लोकः । इदं चेतनोदाहरणम् ॥

कर्णस्य भूषणमिदं ममायतिनिरोधिनः[2] ।
इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते ॥ २२४ ॥

अपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम् ।
स्पृश्यते वा न वेत्येवं कविनोत्प्रेक्ष्य वर्ण्यते ॥ २२५ ॥

१. 'मुत्सुकः' इति पा० । २. 'विरोधिनः' इति पा० ।

*B.* अचेतनोदाहरणमाह—कर्णस्येति । आयतिः वृद्धिः । अस्य उत्प्रेक्षालक्षणोपेतत्वं दर्शयति —अपाङ्गेति ॥

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥२२६॥**

*A.* लिम्पतीवेति । गाढं तमः यदा शरीरेण श्लिष्यति, तदा तत् तमः अङ्गानि लिम्पतीव इत्युत्प्रेक्ष्यते । नीलं तमो यदा विश्वं व्याप्नोति, तदा नभः अञ्जनं वर्षतीव इत्युत्प्रेक्ष्यते ॥

*B.* उत्प्रेक्षालक्षणसहितम् उपमाभ्रान्तिकरम् उदाहरणद्वयं दर्शयति—लिम्पतीवेति । भूयिष्ठं—नैतत् द्वितयमेव, ईदृशमनेकमस्ति इत्यभिप्रायः ॥

**केषाञ्चिदुपमाभ्रान्तिरिवश्रुत्येह जायते ।**
**नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥२२७॥**

*A.* केचित् इदम् उदाहरणद्वयम् उपमेति मन्यन्ते। ते—"न वै तिङन्तेनोपमानमस्ति"—इति भाष्यकारवचनमपि अतिलङ्घ्य इवशब्देन भ्रमन्तीत्याह—केषाञ्चिदिति । तिङन्तवाच्योऽर्थः साध्यतया प्रतीयते, सिद्धयोः द्वयोः उपमानोपमेयभावः इत्यर्थः ॥

*B.* केषाञ्चिदित्यादिना उत्प्रेक्ष्यते इत्यन्तेन ग्रन्थेन उपमाभ्रा-

न्ति निराकरोति । नोपमानं तिङन्तेन इति भाष्यकारोदितं लक्षणम् ॥

**उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया ।**
**लिम्पतेस्तमसश्चासौ धर्मः को नु समीक्ष्यते॥२२८॥**

*A.* तेषां भ्रान्तिं प्रकटयति—उपमानेति । एकेन समानधर्मेण हि उपमानोपमेयव्यवहारो भवति । अत्र लिम्पतितमसोः उपमानोपमेययोः कः समानधर्मः? कोऽपि नास्तीत्यर्थः ॥

*B.* उपमानेति । उपमानभूतायाः लिम्पतिक्रियायाः उपमेयभूतस्य तमसश्च साधारणभूतो न कोऽपि धर्मो दृश्यते ॥

**यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः ।**
**स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते॥२२९॥**

*A.* शङ्कते—यदीति। दूषयति—लिम्पतिरिति । आख्यातार्थक्रियायाः प्राधान्यात् सैव लिम्पतिशब्दवाच्या । सा उपमानं सैव समानधर्मः इति भ्रान्तभाषितम् ॥

*B.* यदीति । यदि लेपनक्रियैव धर्मत्वेन परिकल्प्यते, लेपनक्रियाव्यतिरिक्तो लिम्पतिर्नाम नापरोऽस्ति । लिम्पतिरेव धर्मश्च

१. 'कोऽत्र' इति पा० । २. 'उन्मत्तोऽपि' इति पा० ।

धर्मी च भवतीति चेत्, उन्मत्तजल्पितमेतत्। अनुन्मत्तो नैवं व्यवहरति ॥

**कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।**

**स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम्॥२३०॥**

*A.* शङ्कते—कर्तेति। आख्याते क्रिया तत्कर्ता च द्वयमपि विद्यते; तत्र कर्ता उपमानं क्रिया किल समानधर्मः इति चेत्, तत् प्रतिक्षिपति—न्यग्भूत इति। आख्याते क्रियाप्राधान्येन तत्साधक-कर्ता सर्वाकारेण मग्नः, नामपदस्थकर्तेव न स्वतन्त्रः; अतो न विशेषमाकाङ्क्षते ॥

*B.* कर्तेति। लिम्पतिक्रियायाः कर्ता उपमानमिति चेत्, असौ न्यग्भूतः। प्रसिद्धं हि वस्तु उपमानम् उपमेयं वा भवितुमर्हति; अपित्वसौ क्रियापदे न्यग्भवति। सङ्ख्यापुरुषविशिष्टस्य साधनस्य प्रत्ययवाच्यत्वे, कालोपग्रहविशिष्टायाः क्रियायाः प्रकृतिवाच्यत्वे, प्रकृतिप्रत्ययौ सहितावेव प्रत्ययार्थं ब्रुवाते इति व्यवस्थायां भूतभव्यन्यायेन कथमत्र सिद्धं साध्यम्? साधनभूतायाः क्रियायाः सिद्धावुपक्षीणं वस्तु उपमानम् उपमेयं वा भवितुं न समर्थम् ॥

**यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः[1] ।**
**अङ्गानीति न सम्बद्धं[2] सोऽपि मृग्यः समो गुणः॥ २३१ ॥**

*A*. दूषणान्तरमाह—य इति । यो लिम्पति अमुना तमः तुल्यम् इति वक्तुं न शक्यते इत्युक्तम् । उच्यतां वा ; तथा चेत् अस्मिन् वाक्ये अङ्गानीति पदस्य न सम्बन्धः । अपिच लिम्पति-धर्मो लेपः तमस्यपि भवेत् ; स तु नास्ति ॥

*B*. य इति । अन्यच्च दूषणमस्ति—उपमानभूतस्य तमसा समानधर्मत्वं च गवेषणीयम् इति । तदाह—सोऽपि मृग्यः समो गुणः इति ॥

**यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते ।**
**न तथा लिम्पतौ लेपादन्यदत्र प्रतीयते ॥२३२॥**

*A*. तदेव स्पष्टयति—यथेति । इन्दुरिव ते वक्त्रम् इत्युपमायाम् उपमाने इन्दाविव उपमेयेऽपि वक्त्रे यथा कान्तिः प्रतीयते, तथा उपमाने लिम्पतौ इव उपमेये तमस्यपि स समानधर्मो लेपनं प्रतीयेत । न तदस्ति ; नाप्यन्यः कोऽपि तादृशो धर्मः ॥

---

१. 'शंसिनः' इति पा० । २. 'सम्बन्धः' इति पा० ।

*B*. समानधर्मस्तु न कण्ठोक्तः, नापि प्रतीयते इत्याह—यथेति ॥

**तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः ।**
**अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम्॥२३३॥**

*A*. उपसंहरति—तदिति ॥

*B*. उपसंहरति—तदिति । उपश्लेषणं सम्बन्धः ॥

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥**
**॥ २३४ ॥**

*A*. उपमासूचकत्वेन दर्शितः इवशब्दः उत्प्रेक्षायामपि साधारणः इत्याह—मन्ये इति ॥

*B* मन्ये इति । न केवलम् उपमाया एव द्योतकः इवशब्दः उत्प्रेक्षाया अपि ॥

इति उत्प्रेक्षाचक्रम्

**हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।**
**कारकज्ञापकौ हेतू तौ चानेकविधौ यथा ॥२३५॥**

*A* हेतुं लक्षयिष्यन् भामहेनोक्तं—‘हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मताः’—इत्येतत् प्रतिक्षिपति—हेतुश्चेति। उत्तम-भूषणम् इति प्रत्येकमभिसम्बन्धः। क्रियायाः कारणं हेतुः इति सामान्यलक्षणं मत्वा तं विभजते—कारकेति। तौ कारकज्ञापकौ हेतू भावरूपत्वेन अभावरूपत्वेन भावरूपकार्यत्वेन चित्रहेतुत्वेन च बहुविधौ ॥

*B.* प्रागुद्दिष्टानामपि हेतुसूक्ष्मलेशानां पुनरुद्देशेन तेषाम् अलङ्कारान्तरात् उत्कर्षं कथयति—हेतुश्चेति। तत्र हेत्वलङ्का-रमाह। हेतुलक्षणन्तु कारकत्वेन ज्ञापकत्वेन च द्विप्रकारमित्याह—कारकज्ञापकौ हेतू इति। तौ एकैकशः अनेकप्रकारौ इत्याह—तौ चेति ॥

अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः।
उत्पादयति सर्वस्य[1] प्रीतिं दक्षिणमारुतः॥२३६॥
प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम्।
अलङ्कारतयोद्दिष्टं निवृत्तावपि तत् समम् ॥२३७॥

*A.* भावरूपकार्यं हेतुं दर्शयति—अयमिति। हेतोः अल-ङ्कारत्वप्रत्याख्यायिनं भामहं प्रत्याह—प्रीत्युत्पादनेति। अत्र

१. ‘लोकस्य’ इति पा०।

दक्षिणमारुतस्य आन्दोलितप्रौढचन्दनद्रुमपल्लवः इति विशेषणं हेत्वलङ्कारतया उक्तम् । एतद्विशेषणनिवृत्तावपि दक्षिणमारुतस्य हेतुत्वमात्रं सिद्धम्; तत्र नालङ्कारः ॥

*B.* उदाहरति—अयमिति । मलयमारुतस्वरूपवर्णनस्य प्रीत्युत्पादनयोग्यत्वं च प्रयोजनमित्याह—प्रीतीति । निवृत्तावपि तत् समम्—इत्यत्र अपिशब्देन केवलं प्रवर्तकहेतोरिव निवर्तकहेतोरपि गुणादिवर्णनं कार्यम् इत्याह ॥

**चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।**
**पथिकानामभावाय पवनोऽयमुपस्थितः ॥ २३८ ॥**

**अभावसाधनायालमेवंभूतो हि मारुतः ।**
**विरहज्वरसन्तापमनोज्ञारोचके[1] जने ॥ २३९ ॥**

*A.* अभावरूपकार्ये हेतुं दर्शयति—चन्दनेति । सकलजनसन्तापहरो मलयमारुतः कथं पाथिकप्राणहरः इत्याशङ्क्य आह—अभावेति । यानियानि वस्तूनि दयितासहितस्य प्रीतिकरणानि तानितानि तद्वियोगे सन्तापकराणि भवन्ति । विरह-

---

१. ‘सम्भूत’ इति पा०।

ज्वरसन्तापकृतमनोज्ञपदार्थविषयकारोचकव्याधिमति जने मनोहरो मारुतः प्राणहरणाय अलम् ॥

*B*. दर्शितस्तु प्रवर्तकहेतुः; निवर्तकहेतुं दर्शयति—चन्द्नेति। एतदेव व्याचष्टे—अभावेति। मनोज्ञेष्वपि वस्तुषु विरहज्वरार्तानाम् अरोचकम् अरुचिः भवति। रोगाख्यायां ण्वुल् बहुलम् इति बहुलग्रहणात् नपुंसकत्वम् ॥

**निर्वर्त्ये च विकार्ये च हेतुत्वं तदपेक्षया।**
**प्राप्ये तु कर्मणि प्रायः क्रियापेक्षैव हेतुता ॥ २४० ॥**

*A*. निर्वर्त्य इति। निर्वर्त्यविकार्यप्राप्यभेदात् त्रिविधो हेतुः। तत्र निर्वर्त्ये विकार्ये च कर्मणि निर्वर्तकविकारकयोः हेत्वोः तत्तत्कर्मापेक्षया हेतुत्वम्। प्राप्ये तु कर्मणि तद्गतविशेषजननाभावात् न प्राप्यं प्रति हेतुत्वम्। प्राप्तिक्रिया जायते इति तदपेक्षया हेतुत्वम्। प्रायःशब्देन बुद्धिसुखदुःखादिषु च प्राप्येषु तदपेक्षयैव हेतुत्वम् इति ज्ञाप्यते ॥

*B*. हेतुहेतुमतोः कः सम्बन्धः इत्यत्राह—निर्वर्त्य इति। अस्यार्थः—निर्वर्तनं नाम अनुत्पन्नस्य उत्पादनम्। भाविनिष्पादनं निर्वर्त्यम्; तथा च घटं करोति इत्यादौ घटादयः निर्वर्त्याः।

विकृतिर्नाम दशान्तरापत्तिः। एष्यद्दशान्तरं विकार्यम्; तथा च ओदनं पचति इत्यादौ ओदनादयः, अर्थतः तण्डुलादयः विकार्याः। निर्वर्त्ये तु कर्मणि, तदपेक्षया निर्वर्त्यकर्मसिद्धिश्रद्धया, हेतुत्वं कर्तृत्वम् इति यावत्। एवं विकार्येऽपि। प्राप्ये तु कर्मणि— अत्र तुशब्दः पूर्वस्मात् वैषम्यं दर्शयति। प्राप्ये कर्मणि स्वरूपस्पृशः कर्तव्यस्य अभावात्, प्राप्तिमात्रस्यैव अपेक्षितत्वात्, क्रियापेक्ष एव हेतुभावः न कर्मापेक्षः। प्राप्यम्—ग्रामं गच्छतीत्यादौ ग्रामादयः प्राप्याः। क्रियावत्त्वं नाम उभयत्र साधारणमेव॥

**हेतुर्निर्वर्तनीयस्य दर्शितः शेषयोर्द्वयोः।**
**दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते ॥२४१॥**

*A.* हेतुरिति। पूर्वोदाहरणद्वयेन भावरूपाभावरूपनिर्वर्तनीयकार्यस्य हेतुः दर्शितः। शेषयोः विकार्यप्राप्ययोः उदाहरणे दत्त्वा ज्ञापको वर्णयिष्यते॥

*B.* प्रागुक्तम् उदाहरणद्वयं निर्वर्तनीयस्य द्रष्टव्यम्। विकार्यप्राप्ययोरपि उदाहरणे दर्शयित्वा ज्ञापकं वर्णयिष्यामि इत्याह— हेतुरिति॥

**उत्प्रवालान्यरण्यानि वाप्यः सम्फुल्लपङ्कजाः।**

**चन्द्रः पूर्णश्च कालेन[1] पान्थदृष्टेर्विषं कृतम् ॥ २४२ ॥**

*A.* विकार्यकर्महेतुं दर्शयति—उदिति । उत्प्रवालत्वादिना विकृतानि अरण्यादीनि । कालेन वसन्तेन तत् सर्वं पान्थदृष्टिविषं कृतम् ॥

*B.* विकार्योदाहरणम्—उदिति । अरण्यादीनां विषत्वापत्तिः दशान्तरापत्तिरिह विकृतिः । पान्थवैरिणा कामेन तत् सर्वं तथा कृतम् इति विकार्यकर्मापेक्षया हेतुत्वम् ॥

**मानयोग्यां करोमीति प्रियस्थाने स्थितां सखीम् ।**
**बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥ २४३ ॥**

*A.* प्राप्यकर्महेतुं दर्शयति—मानेति । दर्शनक्रियाप्राप्यत्वं सख्याः, दर्शनक्रियां प्रति हेतुत्वं बालायाः ॥

*B.* प्राप्योदाहरणमाह—मानेति । प्रियस्थाने प्रेषितां सखीम् उद्दिश्य बाला तावत् एवं कृतवती अहं मानाभ्यासं करोमि इति। एतदर्थं हृदि कृत्वा तां सभ्रूभङ्गं प्रेक्षितवती । अत्र प्राप्यता नाम तस्या भवति पश्यतिक्रियया या सखी प्राप्यते ॥

---

१ 'कामेन' इति पा० ।

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।**
**इतीदमपि साध्वेव कालावस्थानिवेदने ॥ २४४ ॥**

*A*. गत इति । गतोऽस्तमर्कः इत्यादीनि वाक्यानि निशारम्भद्योतकानि । ज्ञापकहेतुमात्रं नालङ्कारः ॥

*B*. ज्ञापकहेतूदाहरणमाह—गत इति । सूर्यास्तमयादिना कालविशेषः परिज्ञातः इति सूर्यास्तमयादेः ज्ञापकत्वम् ॥

**[1]अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।**
**देहोष्मभिः सुबोधं ते सखि कामातुरं मनः ॥ २४५ ॥**

*A*. ज्ञापकहेत्वलङ्कारं दर्शयति—अवध्यैरिति । अवध्यैरित्यादिविशेषणाविशिष्टैः देहोष्मभिः कामातुरं मनः सुबोधम् । इति भावहेतवः॥

*B*. अबन्ध्यैरिति । अबन्ध्यैश्चन्द्रपादानाम् इत्यादिभिः शरीरतापैः तप्तं मनः कामातुरं ज्ञायते इति तेषां ज्ञापकत्वम् ॥

**इति लक्ष्याः प्रयोगेषु रम्या[2] ज्ञापकहेतवः ।**
**अभावहेतवः केचिद्व्या[3]क्रियन्ते मनोहराः॥२४६॥**

---

१. 'अबन्ध्यैः' इति पा० । २. 'रथ्या' 'सम्यग्' इति च पा० ।
३. 'व्याह्रियन्ते' इति पा० ।

*A*. भावहेतुप्रदर्शनानन्तरं अभावहेतवः प्रदर्श्यन्ते इत्याह—इतीति ॥

*B*. इत्यादिज्ञापकहेतवः प्रयोगेषु लक्ष्याः इत्याह—इतीति । अभावहेतवो मनोहरा बहवो विद्यन्ते ; तेषु केचित् व्याक्रियन्ते इत्याह—अभावेति । अभावा नाम बहवः सन्ति शास्त्रकृताः। तत्र नैयायिकपक्षमाश्रित्य अभावस्य विविधत्वमुक्तम् । अभावः पञ्चविधः—प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावः, अभावाभावश्च इति । प्रागभावो नाम कारणान्निष्पाद्यस्य वस्तुनः, तत्कारणसन्निधानात् पूर्वम् , अनुदयः । प्रध्वंसाभावस्तु कारणान्निष्पन्नस्य कारणान्तरेण विनाशः । इतरेतराभावो नाम भावे भावान्तरस्वरूपाभावः । अत्यन्ताभावः कारणशून्यस्य सर्वदा सत्ताया अभावः । अभावाभावो नाम—यस्यकस्यचित् पदार्थस्य अनुत्पत्तेः अभावो यः, असौ अभावाभावः ; वस्तूदयः इत्यर्थः ॥

**अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।**
**अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥**
**२४७ ॥**

*A*. अनभ्यासेनेति । प्रागभावस्य हेतुत्वम् ॥

*B*. क्रमेण उदाहरणानि—अनभ्यासेनेति । अत्र विद्यानभ्यासादेः प्रागभावस्य व्यसनहेतुत्वम् उक्तम् ॥

गतः कामकथोन्मादो गलितो यौवनज्वरः ।
क्षतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥ २४८ ॥

*A.* गत इति । प्रध्वंसाभावस्य हेतुत्वम् ॥

*B.* गत इति । अत्र कामकथोन्मादगमनादिरूपस्य प्रध्वंसाभावस्य पुण्याश्रमानुसन्धानविषये कारणत्वम् ॥

वनान्यमूनि न गृहाण्येता नद्यो न योषितः ।
मृगा इमे न दायादास्तन्मे नन्दति मानसम् ॥ २४९ ॥

*A.* वनानीति । इतरेतराभावस्य हेतुत्वम् ॥

*B.* वनानीति । अत्र वनान्यमूनि न गृहाणि इत्यादिरूपस्य इतरेतराभावस्य मनःप्रमोदे कारणत्वम् ॥

अत्यन्तमसदार्याणामनालोचितचेष्टितम् ।
अतस्तेषां विवर्धन्ते[२] सततं सर्वसम्पदः ॥२५०॥

*A.* अत्यन्तमिति । अत्यन्ताभावस्य हेतुत्वम् ॥

*B.* अत्यन्तमिति । अत्र अनालोचितचेष्टितस्य अत्यन्ताभावः विभूतीनां सार्वत्रिकीणां सर्वकालीनानां हेतुः ॥

---

१. 'हतः' इति पा०। २. 'विवर्तन्ते' पा० ।

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी ।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः ॥
२५१ ॥

*A.* उद्यानेति । अभावाभावस्य हेतुत्वम् ॥

*B.* उद्यानेति । अत्र वस्तुनः उत्पत्तिः प्रागभावाभाव उच्यते । तेन सहकारमञ्जरीणाम् उद्भेदस्य पथिकनारीणां मरणकारणत्वम् ॥

प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः ।
भावाभावस्वरूपस्य कार्यस्योत्पादनं प्रति॥२५२॥

*A.* अभावहेतूदाहरणानि व्याचष्टे—प्रागिति । चतुर्षु उदाहरणेषु भावरूपं कार्यम्; अन्त्योदाहरणे कार्यत्वम् अभावस्य ॥

*B.* प्रागिति । सुबोधम् ॥

दूरकार्यस्तत्सहजः कार्यानन्तरजस्तथा ।
अयुक्तयुक्तकार्यौ[1] चेत्यसङ्ख्याश्चित्रहेतवः॥२५३॥

*A.* चित्रहेतुनामकान् हेतूनाह—दूरेति ॥

*B.* चित्रहेतुलक्षणप्रकारमाह—दूरेति । आश्चर्यहेतवस्तु अपर्यन्ताः; तत्र केचन दर्श्यन्ते । क्वचित् देशे स्थितस्य हेतोः

१. 'अयुक्तो युक्तकारी' 'युक्तकार्यः' इति च पा० ।

देशान्तरे कार्ये दूरकार्यः। कार्येण सह जायमानः तत्सहजः। कार्यस्य पश्चाज्जातः कार्यानन्तरजः। स्वस्वभावविरुद्धार्थकारी अयुक्तकार्यः। स्वस्वभावानुरूपार्थकारी युक्तकार्यः॥

**तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः[1]।**
**अत्यन्तसुन्दरा दृष्टास्तदुदाहृतयो यथा॥ २५४॥**

*A.* कारणमन्यत्र कार्यमन्यत्र इत्यादि विरुद्धम् इत्याशङ्क्य परिहरति—त इति॥

*B.* त इति। अमी हेतवः गौणवृत्तिमाश्रित्य प्रयोक्तव्याः॥

**त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने।**
**मुक्तं तदन्यतस्तेन सोऽस्म्यहं मनसि क्षतः॥ २५५॥**

*A.* त्वदिति। वैयधिकरण्येन प्रवृत्तो हेतुः दूरकार्यः। यत्किञ्चिदपि पश्यन्त्याः कस्याश्चित् चक्षुषोः विभ्रमातिरेकेण हृतहृदयः कश्चित् एवम् आह—सोऽस्म्यहं मनसि क्षतः इति॥

*B.* क्रमेण उदाहरणानि। त्वदिति—अन्यतो मुक्तस्य अपाङ्गात्मनो हेतुभूतस्य अस्त्रस्य अन्यतः क्षताभिधानकार्यदर्शनात् असौ दूरकार्यः॥

---

१. ' व्यपाश्रयात् ' इति पा०।

**आविर्भवति नारीणां वयः पर्यस्तशैशवम् ।**
**सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः ॥२५६॥**

*A.* कार्यसहजं हेतुं दर्शयति—आविरिति । तारुण्यस्य वयसः युवोन्मादकत्वमत्र लक्ष्यम् ॥

*B.* आविरिति । पर्यस्तशैशवस्य नारीणां वयोलक्षणस्य हेतोः पुंसाम् अङ्गजोन्मादविभ्रमस्य च कार्यस्य सहदर्शनात् तत्सहजः॥

**पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।**
**प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥२५७॥**

*A.* पश्चादिति । अत्र कार्यानन्तरजो हेतुः । चन्द्रोदयम् उत्प्रेक्षमाणानाम् उदयात् प्रागेव रागः प्रवृद्ध इति भावः ॥

*B.* अत्र चन्द्रोदयलक्षणात् हेतोः पूर्वमेव रागसागरः उदीर्णः इति कार्यस्य उदयलाभः । स इह गौणवृत्त्याश्रयो हेतोः अतिशयं पुष्यति । कार्यानन्तरजः एष हेतुः ॥

**राज्ञां हस्तारविन्दानि कुट्मलीकुरुते कुतः ।**
**देव त्वच्चरणद्वन्द्वरागबालातपः स्पृशन् ॥२५८॥**

*A.* अयुक्तहेतुं दर्शयति—राज्ञामिति । कुतः इति अयुक्तं दर्शयति ॥

*B.* राज्ञामिति । बालातपस्वभावः कमलविकासकारी । अत्र

तु वर्णनीयचरणद्वन्द्वरागबालातपः राज्ञां कराम्बुजानि सङ्कोचयति इति स्वभावाननुरूपकारित्वात् अयुक्तकार्यः ॥

**पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।**
**त्वत्पादनखचन्द्राणामर्च्चिषः कुन्दनिर्मलाः ॥ २५९ ॥**

*A*. युक्तहेतुं दर्शयति—पाणीति ॥

*B*. पाणीति । अत्र तु वर्णनीयनखचन्द्रार्च्चिरपि राज्ञां कराम्बुजानि सङ्कोचयति इति स्वभावानुरूपार्थकारित्वात् युक्तकार्यः ॥

**इति हेतुविकल्पानां दर्शिता गतिरीदृशी ।**

इति हेतुचक्रम् ।

**इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात् सूक्ष्म इति स्मृतः॥ २६० ॥**

*A*. सूक्ष्मं लक्षयति—इङ्गितेति । इङ्गितं कायचेष्टाविशेषः; आकारः मानसविकारद्योतकमुखवर्णादिः ; ताभ्यां लक्षणीयः अर्थः सौक्ष्म्यात् दुर्ज्ञेयत्वात् सूक्ष्मः ॥

*B*. इङ्गितेति । इङ्गितं भ्रूक्षेपकटाक्षवीक्षणादि ; आकारः स्वेदरोमाञ्चादिः ; ताभ्याम् अनुमेयः अर्थः सूक्ष्मः ॥

कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेक्ष्य कान्तमबला लीलापद्मं न्यमीलयत्॥२६१॥

पद्मसम्[1]मीलनादत्र सूचितो निशि सङ्गमः ।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥
२६२ ॥

*A.* इङ्गितलक्षणं दर्शयति—कदेति । आकीर्णे जनसंघाते 'कदा नौ सङ्गमो भवेत्?' इति वक्तुमक्षमं, कान्तं तदिङ्गितेन ज्ञात्वा, हस्तगतं पद्मं निमीलनाभिनयेन मुकुलीचकार । एतत् विवृणोति—पद्मेति ।

*B.* कदेति। नायिकादर्शितस्य निशि समागमस्य पद्मसम्मीलनलक्षणेन इङ्गितेन प्रियतमेन लक्षितत्वात् अयम् इङ्गितलक्ष्यः सूक्ष्मः ॥

त्वदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत ।
उद्दामरागतरला छाया कापि मुखाम्बुजे॥२६३॥

इत्यसं[2]भिन्नरूपत्वाद्रत्युत्सवमनोरथः ।
अनुल्लङ्घ्यैव सूक्ष्मत्वमभूदत्र व्यवस्थितः॥२६४॥

---

१. 'पद्मस्य मीलनात्' इति पा० । २. 'अनुद्भिन्न' 'अनुत्पन्न' इति च पा० ।

*A*. आकारलक्ष्यं दर्शयति—त्वदिति । गीतगोष्ठ्यां त्वदर्पितदृशः तस्याः मुखाम्बुजे उद्दामरागतरला रागातिरेकभासुरा कापि शोभा अवर्धत इति, तदीक्षणसमये तस्या मुखच्छायाभेदेन तस्मिन् अनुरागं लक्षयित्वा कोऽपि कथयति । इतीति—कस्मिंश्चित् अनुरागलक्षणस्य अल्पस्य अप्रकाशितरूपत्वात् निपुणवेद्यत्वात् सूक्ष्मत्वम् ॥

*B*. त्वदिति । वर्णनीयमनसि वर्तमानः रत्युत्सवमनोरथः विलक्षणया मुखच्छायया लक्षित इति आकारलक्ष्यः सूक्ष्म एषः ॥

इति सूक्ष्मम्

**लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम् ।**
**उदाहरण एवास्य रूपमाविर्भविष्यति ॥ २६५ ॥**

*A*. लेशं लक्षयति—लेश इति । किञ्चित्प्रकाशस्य अर्थरूपस्य प्रकारान्तरेण निगूहनं लेशः ॥

*B*. लेशालङ्कारमाह—लेश इति । लेशेन व्याजेन निर्भिन्नस्य प्रकटीभूतस्य वस्तुनः तिरस्करणं लेशः लवः इति सम्बन्धः । सात्त्विकविकारेषु अन्यतमस्य तत्कारणतया ज्ञायमानस्य कारणान्तरकथनेन निगूहनम् । सूक्ष्मभूतेन कारणेन अनुमितस्य गूहनात् लेशः । लवस्य रूपम् उदाहरणे व्यक्तीभविष्यति इत्याह—उदाहरण इति ॥

**राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः ।**
**अवगच्छेयुरा ज्ञातमहो शीतानिलं वनम् ॥२६६॥**

*A.* राजेति । राजकन्यादर्शनसमये समुपजातम् आत्मनो रोमाञ्चमवेक्ष्य, तद्रक्षकैरात्मविकारदर्शनभिया तद्गूहनोपायं विचिन्त्य, उपवनानिलशैत्यं रोमाञ्चहेतुमुपन्यस्तवान् । आः ज्ञातम् इति रोमाञ्चहेतुस्मरणं द्योतयति ॥

*B.* उदाहरति—राजेति । राजकन्याविषयम् अनुरागं पुलकोद्गमेन रक्षकाः शुद्धान्तरक्षकाः ज्ञास्यन्तीति भयात् कोऽत्र परिहारः इति चिन्तयता, कारणान्तरेण आः ज्ञातं शीतानिलं वनम् इति लेशेन परिहारः कृत इति उक्तलक्षणो लेशालङ्कारः॥

**आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।**
**अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम्॥२६७॥**

*A.* आनन्देति । अत्र स्वानुरागप्रकाशकानन्दाश्रुरूपसात्त्विकभावनिगूहनाय अश्रुकारणं पुष्परेणुमुपन्यस्तवान् । उदाहरणद्वयप्रदर्शनं शङ्काहेतुसात्त्विकभेदकथनेन विषयव्याप्त्यर्थम् ॥

*B.* आनन्देति । राजकन्याविषयम् अनुरागं परिसरवर्तिनः

प्रमोदबाष्पेण ज्ञास्यन्ति इति तस्य कारणान्तरकथनात् लेशलक्षणयोगः ॥

**इत्येवमादिस्थानेऽयमलङ्कारोऽतिशोभते ।**
**लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्॥२६८॥**

*A.* लेशस्य लक्षणान्तरमाह—लेशमिति । एतत् लेशलक्षणं वक्ष्यमाणव्याजस्तुतिलक्षणेन सङ्कीर्णम् इति न स्वाभिमतमित्याह—एके इति ॥

*B.* इतीति । एवमादिस्थाने ईदृशे स्थाने । लेशलक्षणं बहुप्रकारम् आचक्षते ; इदमेव तु श्लाघनीयम् इत्यभिप्रायः । लेशालङ्कारस्य आचार्यान्तरमतं लक्षणं दर्शयति—लेशामिति । एके केचिदाचार्याः । लेशतः कृता स्तुतिर्वा लेशतः कृता निन्दा वा लेशः इत्यर्थः ॥

**युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।**
**रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि॥२६९॥**

**वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये ।**
**कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरान्[1] ॥**
**२७० ॥**

---

१. ' निरन्तरम् ' इति पा० ।

चपलो निर्दयश्चासौ जनः किं तेन मे सखि ।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः॥२७१॥

दोषाभासो गुणः कोऽपि[1] दर्शितश्चाटुकारिता ।
मानं सखीजनोद्दिष्टं कर्तुं रागादशक्तया ॥ २७२॥

*A.* युवेत्यादि । लेशोदाहरणे स्पष्टे ॥

*B.* युवेत्यादि । राज्ञो वीर्योत्कर्षस्तुतिः कन्यायाः भोगान् निरन्तरान् निर्विविक्षोः दोषत्वेन प्रतिभासमाना तद्राजविषयाभिलाषनिवृत्तये भवति । चपल इत्येतत् व्याचष्टे—दोषाभास इति । अस्मिन्नुदाहरणे दोषाभासाः गुणत्वेन दर्शिताः । चपलः विरहावस्थायां स्थातुमशक्तः; निर्दयः संश्लेषे कठोरः; आगःप्रमार्जनाय चाटुवचनं शिक्षितवान् इति गुणः । अत्र सखीजनोपदिष्टं मानं निर्वोढुम् अपारयन्त्या नायिकया प्रियस्य दोषाभासो गुणीकृतः ॥

इति लेशचक्रम्

उद्दिष्टानां पदार्थानामनुदेशो यथाक्रमम् ।
यथासङ्ख्यमिति प्रोक्तं सङ्ख्यानं क्रम इत्यपि ॥
२७३ ॥

---

१. ' गुणायैव ' इति पा० ।

*A*. क्रमं लक्षयति—उद्दिष्टानामिति ॥

*B*. क्रमालङ्कारमाह—उद्दिष्टानामिति। यस्मिन् उद्दिष्टाः प-दार्थाः सङ्ख्यावन्तः समानसङ्ख्यैः अनुदेशिभिः पदार्थैः क्रमेण सम्बध्यन्ते यथासङ्ख्यम् संख्यानम् क्रमः इत्यपि भवति ॥

**ध्रुवं ते चोरिता तन्वि स्मितेक्षणमुखद्युतिः ।**
**स्नातुमम्भः प्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥२७४॥**

*A*. उदाहरति—ध्रुवमिति । अत्र स्मितद्युतिः कुमुदेन, ईक्षणद्युतिः उत्पलेन, मुखद्युतिः पङ्कजेन, इति यथाक्रमम् अनु-देशः, यथासङ्ख्यम् सङ्ख्यानम् क्रमः इति संज्ञात्रयवान् ॥

*B*. ध्रुवमिति । सुबोधमेतत् ॥

इति क्रमः

**प्रेयः प्रियतराख्यानं रसवद्रसपेशलम् ।**
**ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षं च तत् त्रयम् ॥**
**२७५॥**

*A*. केचित् प्रेय इति रसवद्वर्णयन्ति, उद्धतमिति च । ततः साम्यात् प्रेयो रसवदूर्जस्वीति त्रयं युगपल्लक्षयति—प्रेय इति । रसात्मकत्वात् त्रयम् एतत् उत्कृष्टम् । देवगुरुपित्रादि-विषयः प्रीतिप्रकर्षः प्रेयः ॥

अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ॥ २७६ ॥

इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः ।
भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः ॥२७७॥

*A*. तत् उदाहरति—अद्येति । प्रेयस्त्वं व्याचष्टे—इतीति । कृष्णाविषये प्रेयो दर्शितम् ॥

*B*. प्रेयसः उदाहरणम्—अद्येति । एतत् व्याचष्टे—इतीति । विदुरः एवम् अवदत् । तस्य च अन्यागमनात् एवं न धृतिः प्रीतिः अभवत् यथा विष्णौ गृहमागते आसीत् ॥

सोमः सूर्यो मरुद्भूमिर्व्योम होतानलो जलम् ।
इति रूपाण्यतिक्रम्य त्वां द्रष्टुं देव के वयम् ॥ २७८ ॥

इति साक्षात्कृते देवे राज्ञो यद्रातवर्मणः[1] ।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥२७९॥

---

१ 'राजवर्मणः' इति पा० ।

*A.* महेश्वरविषयं प्रेयो दर्शयति—सोम इति । एतत् व्याचष्टे—इति साक्षात्कृत इति ॥

*B.* अस्य उदाहरणान्तरं दर्शयति—सोम इति । अष्टौ रूपाणि अतिक्रम्य त्वां परमार्थतः द्रष्टुं वयं के । व्याचष्टे—इतीति । शिवे साक्षात्कृते सति रातवर्मनाम्ना राज्ञा प्रीतिप्रकाशनं यत् तच्च पूर्वोक्तं च प्रेयः इति अवगम्यताम् ॥

इति प्रेयः

**मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम् ।**
**सैषावन्ती[1] मया लब्धा कथमत्रैव जन्मनि॥२८०॥**

**प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।**
**रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥**

*A.* अष्टरसभेदेन रसवत् अष्टधा दर्शयिष्यति ; शृङ्गारवत् दर्शयति—मृतेति । प्राक् प्रीतिरिति—"मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः । असंप्रयोगविषया सैव प्रीतिर्निगद्यते"—इति प्रीतिलक्षणम् । तत्र पूर्वोदाहरणे प्रीतिप्रकर्षो दर्शितः । अत्र तु रतिः रूपबाहुल्ययोगेन शृङ्गाराकारा दर्शिता ।

---

१ 'तन्वी' इति पा० ।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ।

शृङ्गारहास्यकरुणा वीररौद्रभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्ट नाट्यरसाः स्मृताः ।

ज्ञायमानतया यत्र विभावो भावपोषकृत् ।
आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा ।

अनुभावो विकारस्तु भावसंसूचनात्मकः ।

स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव सागरे ॥

निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्यौग्र्यचिन्ता-
त्रासेर्ष्यामर्षगर्वस्मृतिमरणमदाः सुप्तिनिद्रावबोधाः ।
व्रीडापस्मारमोहाः समतिरलसतावेगतर्कावहित्था
व्याध्युन्मादौ विषादौत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः ॥

अत्र अवन्तीविषये वत्सराजस्य जाता रतिः, तस्य महा-

कुलीनतादिभिः उद्दीपनविभावैः उद्दीप्यमाना, सा नष्टा इति श्रुत्वा विषादमरणाध्यवसायादिभिः व्यभिचारिभिः स्तम्भप्रलयादिभिः सात्त्विकैः पुनर्जीवन्त्या दृष्टया अनेन वागारम्भानुभावेन परां पुष्टिम् आनीयमाना, शृङ्गाररसताम् आपाद्यते । तदिदं रसवत् । रूपबाहुल्ययोगेन विभावानुभावव्यभिचारियोगेन इत्यर्थः॥

*B*. रसवतः उदाहरणमाह—मृतेति । ननु इदमपि प्रीत्युदाहरणत्वेन दर्शयितुं युक्तम् ; नष्टावन्तीलाभतुष्टवत्सराजस्य प्रीतेः कथं रतिप्रतीतिः इत्याशङ्क्य आह—प्रागिति । विदुरराजवर्मणोः पुरुषोत्तमभवानीपतिविषया स्नेहवृत्तिः असम्प्रयोगविषयत्वात् प्रीतिः भवति । अत्र तु वत्सराजस्य वासवदत्ताविषया स्नेहवृत्तिः सम्प्रयोगविषयत्वात् रतिः भवति । रत्यभिधानः एष स्थायी भावः मृतेत्यादिना वागारम्भानुभावेन अनुमीयमानैः हर्षधृतिस्मृतिवितर्कप्रभृतिभिः व्यभिचारिभिः संसृज्यमानः करुणानन्तरां शृङ्गाराख्यां लभते । तेन अन्वितमेतत् रसवत् ॥

**निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम ।**
**सोऽयं दुश्शासनः पापो दृष्टः[1] किं जीवति क्षणम्॥ २८२॥**

**इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।**
**भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥२८३॥**

---

१. 'लब्धः' इति पा० ।

*A.* रौद्रं दर्शयति—निगृह्येति । द्रौपदीकेशाकर्षणजनितः क्रोधः स्मृत्यौग्रयचिन्तादिभिः व्यभिचारिभिः अनेन वागारम्भानुभावेन च पोषं नीयमानः रौद्रताम् आपाद्यते ॥

*B.* निगृह्येत्यादि । अत्रापि निगृह्येत्यादिना वागारम्भानुभावेन, अनुरूपैः व्यभिचारिभिश्च, संसृज्यमानेन रौद्रात्मतां गतेन क्रोधेन अन्वयात् रसवत् एतत् ॥

**अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।**
**अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम्॥२८४॥**

**इत्युत्साहः प्रकृष्टात्मा तिष्ठन्वीररसात्मना ।**
**रसवत्त्वं गिरामासां समर्थयितुमीश्वरः ॥ २८५ ॥**

*A.* अजित्वेति । अजित्वा सार्णवाम् उर्वीम् इति समरवीरः; अनिष्ट्वा विविधैः मखैः इति देवताम् उद्दिश्य द्रव्यत्यागः इति दानवीरः ; दीनानाथेभ्यः अर्थम् अदत्त्वा इति दयावीरः; इति त्रिविधो वीरो दर्शितः ॥

*B.* अजित्वेति । अत्र वसुधाविजयादेरालम्बनविभावात् उत्पन्नः स्थायी उत्साहः, तेजआद्युद्दीपनविभावैः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भानुभावानुमीयमानेषु स्मृतिवितर्कादिषु व्यभि-

चारिषु निष्पन्नः, वीररससंज्ञया व्यवह्रियते। तेन अन्वितं रसवत् एतत्। अत्र त्रिविधो वीरः प्रतिपाद्यते—अजित्वा सार्णवामुर्वीम् इत्यनेन युद्धवीरः; अनिष्ट्वेत्यनेन दानवीरः; अदत्त्वेत्यादिना दयावीरश्च। उक्तमर्थमभिधत्ते—इतीति॥

**यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी।**
**साधिशेते कथं तन्वी हुताशनवतीं चिताम्॥२८६॥**
**इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम्।**
**अथापरेऽपि बीभत्सहास्याद्भुतभयानकाः॥२८७॥**

*A*. करुणं दर्शयति—यस्या इति। चिताम् आरोपितां स्ववल्लभां दृष्टवतः कस्यचित् मरणजनितः शोकः, तत्सौकुमार्यादिभिः उद्दीपनविभावैः, निर्वेदग्लानिचिन्तादिभिः व्यभिचारिभिः, वागारम्भानुभावेन च निष्पन्नः, करुणरसताम् आपाद्यते। कारुण्यमिति शोकः उच्यते। अथापरेऽपीति वक्ष्यमाणेषु उदाहरणेषु सङ्क्रमं दर्शयति॥

*B*. यस्याः इति। आलम्बनविभावभूतात् देवीमरणात् उत्पन्नः शोकः स्थायी भावः, चितानिवेशनहुताशनज्वालादिभिः उद्दीपनविभावैः उद्दीप्यमानः, वागारम्भानुभावानुमेयैः निर्वेददै-

न्यादिभिः व्यभिचारिभिः संसृज्यमानः, करुणः इति ज्ञायते। तादृशेन करुणरसेन अन्वितं रसवत् एतत्। प्रागुक्ताः शृङ्गारवीरकरुणाः; अथ अपरेऽपि बीभत्सहास्याद्भुतभयानकाः। उच्यन्ते इति वाक्यशेषः ॥

**पायंपायं तवारीणां शोणितं पाणिसम्पुटैः ।**
**कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः॥२८८॥**

*A.* बीभत्सं दर्शयति—पायंपायमिति। अत्र रुधिरपानादिजनिता जुगुप्साहि स्थायी भावः; स च नासावक्रविकूणनादिभिः अनुभावैः, आवेगादिभिः व्यभिचारिभिः, पुष्टः बीभत्सो भवति॥

*B.* पायंपायमिति। अत्र आलम्बनविभावेभ्यो भूतेभ्यः कस्यचित् रिपुविजयसंशंसिनः उत्पन्ना जुगुप्सा स्थायी भावः, शिरश्छेदविगलद्रुधिरधारापरिप्लुतकबन्धनर्तनकौणपान्त्रभूषणशोणितपानादिभिः उद्दीपनविभावैः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भानुमेयेषु भयावेगशङ्कावहित्थादिषु व्यभिचारिषु, उच्यते बीभत्स इति। तेनान्वितं रसवत् एतत् ॥

**इदमम्लानमानाया लग्नं स्तनतटे तव ।**
**छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥ २८९॥**

*A.* हास्यमुदाहरति—इदमिति । कृतप्रणयकलहां, पूर्वदिने सायन्तनसमये दयितेन पादपतनादिभिः सखीसान्त्वनैश्च कृतेऽपि प्रसादने अकृतप्रसादां, प्रियोपभोगचिह्ननखपदादिवैकृतवतीं, नायिकां प्रातरालोक्य जातो हासः स्थायी, स्मितवागारम्भादिभिः अनुभावैः व्यभिचारिभिश्च पुष्टः, हास्यरसो भवति ॥

*B.* इदमिति । अत्र काञ्चित् सखीं, भर्तरि पूर्वं परिगृहीतमानां, तेनैव नवनखपदाङ्कितस्तनीम् आलम्बनविभावभूतामुपाश्रित्य, तस्याः सान्त्वने वितथयत्नायाः सख्याः उत्पन्नो हासः स्थायी भावः, तदीयमानपरिग्रहणादिभिः उद्दीपनविभावैः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भणानुमितेषु शङ्कावहित्थासूयाहर्षगद्गदादिषु व्यभिचारिषु निष्पन्नः, हास्यशब्देन अभिधीयते । तेनान्वितं रसवत् एतत् ॥

**अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।**
**शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम् ॥**
२९० ॥

*A.* अद्भुतं दर्शयति—अंशुकानीति । नन्दनशाखिनां प्रवालादीनाम् अंशुकत्वादिना जनितो विस्मयः स्थायी भावः, साधुवादादिभिः अनुभावैः हर्षावेगधृत्यादिभिः व्यभिचारिभिश्च पुष्टः, अद्भुतरसो भवति ॥

*B.* अंशुकानीति । प्रवालपुष्पशाखासम्पत्तिः निजरूपं तरूणाम्; नन्दनशाखिनां पुनः प्रवालादिस्थानेषु अंशुकहारमन्दिराणि । तदेतदाश्चर्यम् । अतश्च एतेभ्यः आलम्बनविभावेभ्यः कस्यचित् देवभूमिं गतस्य उत्पन्नो विस्मयः स्थायी भावः, तदीयावयवदर्शनादिभिः उद्दीपनविभावादिभिः उद्दीप्यमानः, समुत्पन्नेषु वागारम्भानुमितेषु हर्षरोमोद्गमस्वेदगद्गदादिषु व्यभिचारिषु निष्पाद्यमानः, अद्भुतः इत्युच्यते । तत्सम्बन्धात् रसवदेतत् ॥

**इदं मघोनः कुलिशं धारासन्निहितानलम् ।**
**स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥२९१॥**

*A.* भयानकं दर्शयति—इदमिति । दैत्यघातकमघवत्कुलिशस्मरणजनितं दैत्यस्त्रीणां भयं स्थायी भावः, सर्वाङ्गवेपथुस्वेदशोषादिभिः अनुभावैः दैन्यसम्भ्रमसम्मोहादिभिः व्यभिचारिभिश्च पुष्टः, भयानकरसो भवति ॥

*B.* इदमिति । अत्र महेन्द्रकुलिशधारासन्निहितानलात् आलम्बनविभावात् स्मर्यमाणादपि दैत्यस्त्रीणामुत्पन्नं भयं स्थायी भावः, तदीयावयवदर्शनादिभिः उद्दीपनविभावैः उद्दीप्यमानः, गर्भपातादिभिः अनुभावैः तदनुमितस्तम्भवैवर्ण्यवेपथुप्रभृतिभिः

व्यभिचारिभिः संसृज्यमानः, भयानकरसस्वरूपेण निष्पाद्यते। तत्सम्बन्धात् रसवदेतत् ॥

वाक्यस्याग्राम्यतायोनिर्माधुर्यं दर्शितो रसः।
इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम्॥२९२॥

*A*. एवं शृङ्गारादिभिः अष्टभी रसैः पूर्वदार्शितेन च अग्राम्यतारूपेण रसेन नवधा रसत्वम् इति रसवदलङ्कारम् उपसंहरति वाक्यस्येति ॥

*B*. वाक्यस्येति। माधुर्यगुणे प्रदर्शितः शब्दार्थयोः अग्राम्यतया जातः रसः वाक्यस्य भवति। अलङ्कारतया निर्दिष्टं रसवत्त्वम् अष्टरसायत्तमेव ॥

इति रसवच्चक्रम्

अपकर्ताहमस्मीति हृदि ते मा स्म भूद्भयम्।
विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति॥
२९३॥

एवमुक्त्वा परो युद्धे निरुद्धो दर्पशालिना।
पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम्॥२९४॥

---

१. 'बाच्यस्य' इति पा०। २. 'इति मुक्तः' इति पा०।

*A.* ऊर्जस्वि दर्शयति—अपकर्तेति । एतत् व्याचष्टे—एवमिति । ऊर्जस्वि इत्येतदलङ्कारः गर्वस्थायिभावः उद्धतरस इति, प्रेयोरसः प्रीतिस्थायिभावः प्रेयान् अलङ्कार इति, केचित् कथयन्ति । तेन रसात्मकत्वेन 'युक्तोत्कर्षं च तत् त्रयम्' इत्युक्तम् ॥

*B.* ऊर्जस्विन उदाहरणमाह—अपकर्तेति । अत्र मया अस्य अपकारः क्रियते इति यत्ते चेतसि भयं तत् मा भूत्, मम खड्गः परेषु पराङ्मुखेषु न कदाचिदपि प्रहर्तुम् उत्सहते; इति सर्वदैव रूढः अहङ्कारः प्रतीयते । तेन अन्वितम् ऊर्जस्वि इत्युच्यते । एवमादिकम् ईदृशम् अन्यदपि द्रष्टव्यम् इति यावत् ॥

इत्यूर्जस्वि

**अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये ।**
**यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते॥२९५॥**

*A.* पर्यायोक्तं लक्षयति—अर्थमिति ॥

*B.* अर्थमिति । प्रकारान्तराख्यानं व्याजकथनम् ॥

**दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।**
**तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥**
**२९६॥**

**सङ्गमय्य सखीं यूना सङ्केते तद्रतोत्सवम् ।**
**निर्वर्तयितुमिच्छन्त्या कयाप्यपसृतं ततः ॥२९७॥**

*A.* उदाहरति—दशतीति । एतत् व्याचष्टे—संगमय्येति ॥

*B.* उदाहरति—दशतीति ।सङ्गमय्येति—नायकरत्युत्सवलक्षण-स्वाभिमतम् अर्थम् अनाचक्षाणया सख्या तत्सिद्धये सहकार-मञ्जरीकबलनोन्मुखपरभृतनिवारणव्याजकथनेन सङ्केतगृहात् अ-पसृतम् ॥

इति पर्यायोक्तम् ।

**किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः ।**
**तत्साधनसमापत्तिर्या तदाहुः समाहितम्॥२९८॥**

*A.* समाहितं लक्षयति—किञ्चिदिति ॥

*B.* समाहितालङ्कारमाह—किञ्चिदिति । साधनसमापत्तिः सहायावाप्तिः ।

**मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।**
**उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥ २९९ ॥**

---

१. 'बलात्' इति पा० ।

*A.* तत् उदाहरति—मानमिति ॥

*B.* उदाहरति—मानमिति । माननिराकरणकालोत्पन्नस्य मेघगर्जितस्य मानविध्वंसे सहकारित्वात् इयं दैवकृता सहायसम्पत्तिः इति समाहितम् ॥

इति समाहितम्

**आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् ।**
**उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः ॥ ३०० ॥**

*A.* उदात्तं लक्षयति—आशयस्येति । आशयस्य मनसः, विभूतेः ऐश्वर्यस्य वा, यत् अनुत्तमम् अत्यतिशयं महत्त्वं तत् उदात्तम् ॥

*B.* उदात्तालङ्कारमाह—आशयस्येति । आशयः चित्तवृत्तिः । चित्तगतं सम्पद्गतं वा निस्सीमोत्कर्षं महत्त्वं उदात्तम् ॥

**गुरोः शासनमत्येतुं न शशाक स राघवः ।**
**यो रावणशिरश्छेदकार्यभारेऽप्यविक्लबः ॥ ३०१ ॥**

*A.* मानसोदात्तं दर्शयति—गुरोरिति । मातुः सपत्न्याः वचनमात्रात् देवेन्द्रपदोपमं राज्यं त्यक्तवान् इति मानसौदात्त्यम् । गुरुवचनम् अत्येतुम् औदात्त्यादेव न शशाक इत्येतत् प्रकटयति—यः इति ॥

*B.* उदाहरणम्—गुरोरिति । त्रैलोक्यविजेतू रावणस्य विजयक्षमोऽपि पितृवचनपरिपालनपरः तृणाय राज्यं मन्यमानो वनं गतः इति आशयस्य महत्त्वम् ॥

**[१]रत्नभित्तिषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः ।**

**ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥२०२॥**

*A.* रत्नेति । अनवधिकायां विभूतावेव, भवनेषु रत्नभित्तयः सम्भवन्ति, इति विभूतेः महत्त्वम् अनेन प्रतिपाद्यते ॥

**पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम् ।**

**सुव्यञ्जितमितिव्यक्त[२]मुदात्त[३]द्वयमप्यदः ॥ २०३ ॥**

*B.* श्लोकद्वयमेतद्व्याकरोति—पूर्वत्रेति ॥

इत्युदात्तम्

**अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।**

**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति॥२०४॥**

*A.* अपह्नुतिं लक्षयति—अपह्नुतिरिति । साधर्म्यापह्नुतिः वैधर्म्यापह्नुतिः इति अपह्नुतिः द्वेधा । तत्र साधर्म्यापह्नुतिः नि-

---

१. 'रत्नस्तम्भेषु सङ्क्रान्तप्रति' इति पा० । २. 'प्रोक्त' इति पा० । ३. 'द्वितयं पुनः' इति पा० ।

यतविषयः अनियतविषयश्च इति द्विधा । तत्र अनियतविषयं दर्शयति—नेति ॥

*B*. अपह्नुत्यलङ्कारमाह—अपह्नुतिरिति । लोकप्रसिद्धं किञ्चिद् अपोह्य लोकाप्रसिद्धस्य कस्यचिदर्थस्य प्रकाशनम् अपह्नुतिः इति यावत् । उदाहरति—नेति । कामस्य हि उन्मादन–तापन–शोषण–स्तम्भन–संमोहनात्मानः सायकाः पञ्चैव इति लोकप्रसिद्धम् । तेषां पञ्चसङ्ख्याविशिष्टतया प्रकाशनात् असौ सङ्ख्यापह्नुतिः ॥

**चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः ।**
**सेयमग्निमयी सृष्टिर्मयि शीता परान् प्रति ॥३०५॥**

*A*. नियतविषयं दर्शयति—चन्दनमिति । परेषु शैशिर्यमभ्युपेत्य विरहिणा आत्मनि औष्म्यप्रदर्शनात् विषयस्यैव निह्नुतिरिति नियतविषया निह्नुतिः ॥

*B*. अपह्नुतिभेदं दर्शयति—चन्दनमिति । चन्दनादीनां शिशिरगुणः अपह्नूयते कामेन ; अग्निमयी सृष्टिः इति अन्यार्थश्च क्रियते । परान् प्रति शीता किल इत्युक्त्या स्वस्मिन् विषये तेषाम् औष्ण्यप्रकाशनात् विषयनिह्नुतिरियम् ॥

**शैशिर्यमभ्युपेत्यैव परेष्वात्मनि कामिना ।**

औष्ण्यप्रकाशनात्[1]तस्य सैषा विषयनिह्नुतिः॥३०६॥

अमृतस्यन्दिकिरणश्चन्द्रमा नाम नामतः।
अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः॥
३०७॥

इति चन्द्रत्वमेवेन्दौ निह्नुत्यार्थान्तरात्मता[2]।
उक्ता[3] स्मरार्तेनेत्येषा स्वरूपापह्नुतिर्मता॥ ३०८॥

*A.* वैधर्म्यापह्नुतिश्च द्वेधा—विरुद्धकार्यकरणात् सादृश्याच्च। तत्र विरुद्धकार्यकरणवैधर्म्यापह्नुतिं दर्शयति—अमृतेति॥

*B.* स्वरूपापह्नुतेरुदाहरणमाह—अमृतेति। व्याचष्टे—इतीति। विषयस्वरूपापह्नवयोः अयं भेदः। चन्दनं चन्द्रिकेत्यत्र चन्दनादिगतस्य स्पर्शेन्द्रियविषयभूतस्य शैत्यस्य कामेव निह्नवः; अन्यत्र सुधास्यन्दिकिरणत्वं नाम चन्द्रमसः स्वरूपम् अपह्नुतम् इति स्वरूपापह्नवः॥

उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता।
इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः॥३०९॥

---

१. 'प्रदर्शनात्' इति पा०। २. 'आत्मना' इति पा०। ३. 'उक्तं' इति पा०।

*A.* सादृश्यवैधर्म्यापह्नुतिः पूर्वमेव रूपके दर्शिता इत्याह—उपमेति । उपमापह्नुतिः सादृश्यापह्नुतिः । उपमासु रूपकेषु इत्यर्थः ; उपमारूपकयोः अनातिभेदात् । अपह्नुतिमुपसंहरति—इतीति ॥

*B.* उपमेति । उपमायाः अपह्नुतिः उपमापह्नुतिः; लुप्तोपमाया द्योतकादेः अपह्नवः इत्यभिप्रायः । शशाङ्कवदने इत्यत्र द्योतकसामान्यलोपः दृष्ट एव । अपनह्नुतिभेदाः बहवो दृश्यन्ते, ते लक्ष्येषु द्रष्टव्याः इत्याह—इतीति ॥

इत्यपह्नुतिः

**श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः ।**

**तदभिन्नपदं भिन्नपदप्रायमिति द्विधा ॥ ३१० ॥**

*A.* श्लिष्टं लक्षयति—श्लिष्टमिति ॥

*B.* श्लेषालङ्कारमाह—श्लिष्टमिति । समानाकारम् अनेकार्थं वाक्यं श्लिष्टालङ्कारत्वेन अभिप्रेतम् । तदभिन्नेति—यत्र एकरूपेण पदेन अर्थद्वयं प्रतिपाद्यते तत् अभिन्नपदम्; यत्र भिन्नरूपेण पदेन अर्थद्वयप्रतिपत्तिः तत् भिन्नपदप्रायम् । यस्मिन् वाक्योच्चारणकाले पदं प्रतीयमानेन एकाकारेण अर्थद्वयं प्रतिपादयति तदभिन्नपदम्; यत्र तु पदं वाक्योच्चारणकाले प्रतीयमानाकारान्तरेणैव अर्थान्तरं प्रतिपादयति तत् भिन्नपदप्रायम्; इत्यर्थः ॥

**असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥३११॥**

*A*. अभिन्नपदं दर्शयति—असाविति । उदयमारूढः ऐश्वर्यं प्राप्तः कान्तिमान् प्रभाववान् रक्तमण्डलः अनुरक्तलोकः असौ राजा नृपतिः मृदुभिः लघुभिः षष्ठांशरूपैः करैः सर्वस्य हृदयं हरतीति एकोऽर्थः । तमेव चन्द्रपरेण अर्थान्तरेण साधयति, उदयपर्वतमारूढः प्रभावान् उदयानुरक्तबिम्बः चन्द्रः शीतलैः करैः सर्वस्य हृदयं हरति इति ॥

*B*. उदाहरति—असाविति । उदयम् उदयगिरिं सम्पदं च, आरूढः कृतारोहणः प्राप्तश्च, कान्तिमान् प्रभावान् शोभावान्, रक्तमण्डलः लोहितबिम्बः अनुरक्तराष्ट्रश्च, राजा चन्द्रः भूपश्च, मृदुभिः कोमलैः स्वल्पैश्च, करैः रश्मिभिः बलिभिश्च । अर्थद्वयम् अभिन्नैरेव पदैः समर्थितामिति अभिन्नपदमेतत् ॥

**दोषाकरेण सम्बध्नन् नक्षत्रपथवर्तिना ।**
**राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते ॥३१२॥**

*A*. भिन्नप्रायं दर्शयति—दोषेति । प्रदोषः रजनीप्रथमयामः । नक्षत्रपथवर्तिना गगनचारिणा, दोषाकरेण रजनिकरेण, राज्ञा

चन्द्रेण, सम्बध्नन्, अप्रियं प्रियारहितं मां बाधते इत्येकोऽर्थः। कश्चित् क्षत्रपथातिलङ्घिना दोषाणाम् आकरभूतेन नृपेण सम्बद्धः सन्, अप्रियं विद्विषं मां किं न बाधते ? बाधत एव ॥

*B.* दोषेति। दोषाकरेण दोषाणाम् आकरेण, दोषा नाम रजनी, तां कुर्वता; सम्बध्नन् अन्तरङ्गत्वेन वर्तमानः संयुक्तश्च; नक्षत्रपथवर्तिना तारापथगामिना क्षत्रियमार्गातिलङ्घिना च; राज्ञा चन्द्रेण नरेन्द्रेण च; प्रदोषः प्रकृष्टदोषः रजनीमुखं च; अप्रियम् अनिष्टं प्रियारहितं च; किं न बाधते—किमिति प्रतिषेधे—बाधत एवेत्यर्थः। अत्र वाक्योच्चारणसमये प्रतीयमानादाकारान्तरमाश्रितैः पदैः अर्थान्तरप्रतिपत्तिः इति भिन्नपदप्रायमेतत्। प्रायशब्दस्य सर्वेषु पदेषु नैष विधिः इत्यर्थः॥

**उपमारूपकाक्षेपव्यतिरेकादिगोचराः।**
**प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥३१३॥**

*A.* उपमेति। उपमाद्यलङ्कारेषु तत्तदलङ्काराङ्गतया श्लेषाः दर्शिताः, इदानीम् अन्ये श्लेषप्रकाराः दर्श्यन्ते ॥

*B.* उपमेति। सुबोधमेतत् ॥

**अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोऽपरः।**

**विरुद्धकर्मा[1] चास्त्यन्यः श्लेषो नियमवानपि॥३१४॥**

**नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि ।**

**तेषां निदर्शनेष्वेव रूप[2]माविर्भविष्यति ॥ ३१५॥**

*A.* तानेव प्रकारान् उद्दिशति—अस्तीति । तेषां नामान्येव लक्षणानि ॥

**स्निग्धाः[3] स्वभावमधुराः शंसन्त्यो रागमुल्बणम् ।**

**दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान्॥ ३१६॥**

*A.* अभिन्नक्रियमुदाहरति—स्निग्धा इति । स्निग्धाः शीतलाः प्रेमवत्यश्च, स्वभावमधुराः प्रसन्नाः मनोहराश्च, उल्बणं रागं शंसन्त्यः सूचयन्त्यः कथयन्त्यश्च, प्रेषिताः अभिमुखप्रेरिताः गच्छेति चोदिताश्च । दृशां दूतीनां च कर्षन्तीति एकक्रियायोगात् अभिन्नक्रियत्वम् ॥

*B.* अभिन्नक्रियो यथा—अत्र कर्षन्तीति एकस्यां क्रियायां दृशां दूतीनां च एकाकारपदविशेषितानाम् आवेशात् अभिन्नक्रियो नाम श्लेषविशेषः ॥

---

१. 'धर्मा' इति पा० २. 'रूपव्यक्ति' इति पा० ३. 'वक्राः' इति पा० ।

**मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः ।**
**आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥ ३१७॥**

*A.* अविरुद्धक्रियाद्वयं दर्शयति—मधुरा इति । मधुराः श्रुतिसुभगाः, रागवर्धिन्यः स्मरोद्दीपनकर्यः, कोमलाः मृदवः, आसितेक्षणाः निश्चलीकृतेक्षणाः, कोकिलानां गिरः आकर्ण्यन्ते । मधुराः मनोहराः, रागवर्धिन्यः स्वप्रेम्णा रागोद्दीपिन्यः, कोमलाः मृद्वङ्ग्यः, कोकिलासदृशागिरः असितेक्षणाः तरुण्यः आश्लिष्यन्ते । आकर्ण्यन्ते श्लिष्यन्ते इति क्रिये अविरुद्धे ॥

*B.* भिन्नक्रियो यथा—मधुरा इति । अत्र आकर्ण्यन्ते श्लिष्यन्ते च इति क्रियापदद्वयस्य प्राधान्यतः समुच्चयेन उपात्तस्य मधुराः इत्यादिश्लिष्टपदैः कोकिलागिरः इति असितेक्षणाः इत्यपि विशेष्यैकपदवर्जे पर्यायतः सम्बन्धो भवतीति भिन्नक्रियो नाम श्लेषविशेषः ॥

**रागमादर्शयन्नेष वारुणीयोगवर्धितम् ।**
**तिरोभवति[1] घर्मांशुरङ्गजस्तु विजृम्भते ॥ ३१८ ॥**

---

१ 'परापतति' 'पराभवति' इति च पा० ।

*A.* विरुद्धक्रियमुदाहरति—रागमिति । वारुणीयोगवर्धितं प्रतीचीसम्बन्धवर्धितं, रागं लौहित्यम्, आदर्शयन् घर्मांशुः तिरोभवति । तस्मिन् काले वारुणीयोगवर्धितं मधुपानवर्धितं, रागं रतेषु इच्छाम्, आदर्शयन् जनयन्, अङ्गजो विजृम्भते । तिरोभवति विजृम्भते इति क्रिये विरुद्धे ॥

*B.* विरुद्धकर्मा यथा—रागमिति । अत्र विरुद्धक्रियत्वं नाम, वारुणीयोगवर्धितस्य रागस्य प्रदर्शने तुल्येऽपि, सूर्यलक्षणस्य वस्तुनः तिरोभवनं स्मरलक्षणस्य तु विजृम्भणम्, इति विरुद्धस्य क्रियाद्वयस्य दर्शनात् विरुद्धकर्मा नाम श्लेषविशेषः । रागो वर्णविशेषः कामश्च, वारुणी दिक् सुरा च ॥

**निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता ।**
**शरेष्वेव नरेन्द्रस्य मार्गणत्वञ्च वर्तते ॥ ३१९ ॥**

*A.* नियमश्लेषं दर्शयति—निस्त्रिंशत्वमिति । अस्य नरेन्द्रस्य असावेव निस्त्रिंशत्वं न परिजने; निस्त्रिंशत्वं क्रूरत्वम् । धनुष्येव वक्रता अनृजुत्वं न मानसे कौटिल्यम् । शरेष्वेव मार्गणत्वं न वाचि फलार्थयाचनम् । निस्त्रिंशत्वादीनाम् अस्यादावेव इति नियमश्लेषत्वम् ॥

*B.* नियमवदुदाहरणम्—निस्त्रिंशत्वमिति । अत्र निस्त्रिंश-

तादि चित्तादिविषयान्तरात् निवर्त्य खड्गादावेव स्थापितम् इति नियमवान् नाम श्लेषविशेषः । निस्त्रिंशत्वं मनस्तैक्ष्ण्यम् अन्यत्र कृपाणता। वक्रता अनार्जवं कुण्डलितत्व च । मार्गणत्वं याचकत्वं सायकत्वञ्च ॥

पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति ।
अथवा दृश्यते रागिमिथुनालिङ्गनेष्वपि ॥३२०॥

*A*. अनियमश्लेषं दर्शयति—पद्मानामिति । पद्मानां दण्डेषु नालेषु कण्टकः तीक्ष्णाग्रः अवयवः; रागिमिथुनालिङ्गनेषु कण्टको रोमाञ्चः । त्वयि रक्षति सति न राज्ये कण्टकः क्षुद्रशत्रुः भवति । पद्मानामेव इति कृतस्य नियमस्य भङ्गात् अयं नियमाक्षेपरूपः श्लेषः ॥

*B*. नियमाक्षेपोदाहरणम्—पद्मानामिति । कण्टकः प्रसिद्धः; कदाचित् चोरादिः। पद्मदण्डेष्वेव नियमितकण्टकसद्भावस्य अथवेति आक्षिप्य रागिमिथुनालिङ्गनेष्वपि सद्भावकथनात् नियमाक्षेपो नाम श्लेषः। आलिङ्गनेषु कण्टकशब्देन रोमाञ्चः अभिधीयते ॥

महीभृद्भूरिकटकस्तेजस्वी नियतोदयः ।
दक्षः प्रजापतिश्चासीत्स्वामी शक्तिधरश्च सः ॥
३२१ ॥

*A*. अविरोधिश्लेषमुदाहरति—महीभृदिति। महीभृत् राजा भूरिकटकः विस्तीर्णनगरः, गिरिः विपुलनितम्बः; तेजस्वी बलवान् नियतोदयः अभङ्गुरार्थोदयः, रश्मिमान् नियमेन उदेति; दक्षः क्षिप्रकारी प्रजापतिः प्रजापालकः, दक्षो नाम प्रजापतिषु एकः। स्वामी जगतः ईशः शक्तिधरः बलवान्, स्कन्दः शक्ति-रूपायुधधरः। इति विशेष्यविशेषणे परस्परानुकूले आरोप्येते इति अविरोधिश्लेषः॥

*B*. अविरोध्युदाहरणम्—महीभृदिति। भूरिकटकत्वादयो महीभृदादीनाम् अविरुद्धाः इति अविरोधी नाम श्लेषविशेषः। महीभृत् पर्वतो राजा च। भूरिकटकः अनेकसानुः अनेकमूल्य-कटकः। तेजस्वी दीप्तिमान्; नियतोदयः एकत्र सूर्योदयो गृह्यते, अन्यत्र व्यवस्थितसमृद्धिः; सूर्यादीनाम् उदयः प्रादुर्भा-वः नियमेन। दक्षः समर्थः दक्षप्रजापतिः। प्रजानाम् अधिपः प्रजापतिः इति च केषाञ्चित् सामान्याभिधानम्। स्वामी नाथः स्कन्दश्च। शक्तिधरः प्रभुमन्त्रोत्साहशक्तिधरः आयुधविशेषधरश्च॥

**अच्युतोऽप्यवृषच्छेदी राजाप्यविदितक्षयः।**
**देवोऽप्यविबुधो जज्ञे शङ्करोऽप्यभुजङ्गवान्॥**

३२२॥

*A*. विरोधिश्लेषमुदाहरति—अच्युत इति। अच्युतः कृष्णः

वृषरूपधरम् असुरं हतवान् इति अवृषच्छेदित्वं विरुद्धम्, प्रस्तुतो राजा अच्युतः स्वधर्मात् परिभ्रष्टो न भवति । राजा चन्द्रः अविदितक्षयः, प्रतिमासं क्षीयमाणत्वात् अविदितक्षयः इति विरुद्धम्, प्रस्तुतो लोकरञ्जको विभवक्षयानभिज्ञः । इत्यारोप्यमाणविरुद्धविशेषणयोगात् विरोधिश्लेषः ॥

*B.* विरोध्युदाहरणमाह—अच्युत इति । अत्र अच्युतादीनाम् अवृषच्छेदित्वादि विरुद्धम् इति विरोधी नाम श्लेषः । अच्युतः कृष्णः वृषभान् सप्त जघान, तेन अवृषच्छेदित्वं विरुद्धम् । राजा चन्द्रः; स खलु विदितक्षय एव, अविदितक्षयत्वं तस्य विरुद्धम् । देवः सुरः, तस्य अविबुधता विरुद्धा । शङ्करो भुजङ्गभूषणः प्रसिद्धः, अभुजङ्गता तस्य विरुद्धा । वर्णनीयपक्षे तु च्युतिरहितो धर्मानुच्छेदी रञ्जकः क्षयरहितः स्वामी बुधजनसहितः सुखकरो धूर्तरहितश्चेति । अविबुधः विगतबुधो न भवतीत्यर्थः ॥

इति श्लेषचक्रम्

**गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् ।**
**विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ ३२३ ॥**

*A.* विशेषोक्तिं लक्षयति—गुणेति । गुणजातिक्रियाद्रव्याणां सत्तत्कार्यहेतूनां तत्कार्यशक्त्यातिशयद्योतनार्थं स्वरूपवैकल्यं यत् कथ्यते सा विशेषोक्तिः ॥

*B.* गुणेति । आदिशब्देन द्रव्यादिवैकल्यं गृह्यते ; विशेषदर्शनाय अतिशयदर्शनाय । अवधारणेन अतथारूपो व्यावर्त्यते ॥

**न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।**
**तथापि जितमेवासीदमुना भुवनत्रयम् ॥३२४॥**

*A.* गुणवैकल्यं दर्शयति—नेति । कठोरत्वतैक्ष्ण्यविरहितेनापि अस्त्रेण शूरस्य त्रिभुवनजयकार्ये शक्त्यतिशयो दर्शितः ॥

*B.* गुणवैकल्यं यथा—नेति । आयुधेन कठोरत्वतीक्ष्णत्वविकलेन पुष्पधन्वा त्रीण्यपि जगन्ति जितवान् इति तस्य प्रभावातिशयः प्रतीयते । सेयं गुणवैकल्यवती विशेषोक्तिः ॥

**न देवकन्यका नापि गन्धर्वकुलसम्भवा ।**
**तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥३२५॥**

*A.* जातिवैकल्यकार्यातिशयं दर्शयति—नेति । देवादिजातिवैकल्येऽपि कस्याश्चित् वेधसोऽपि तपोभङ्गकरणं कार्यातिशयः॥

*B.* जातिवैकल्यं यथा—नेति । अत्र देवकन्यकात्वादिप्रकृष्टजातिवैकल्येऽपि वेधसोऽपि तपोभङ्गम् इयं विधत्ते इति वर्णनीयायाः रूपातिशयः प्रतीयते । इयं जातिवैकल्यवती विशेषोक्तिः ॥

**न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः ।**
**न च रक्ताभवद्दृष्टिर्जितञ्च[1] द्विषतां कुलम्[2] ॥ ३२६॥**

*A*. नेति । भ्रुकुटिबन्धादिक्रियावैकल्येऽपि भूपेन द्विषतां कुलं हतम् इति कार्यातिशयः ॥

*B*. क्रियावैकल्येन यथा—नेति । अत्र भ्रूभङ्गादेः क्रियायाः वैकल्येऽपि द्विषन्तोऽपि जिताः इति वर्णनीयस्य प्रतापातिशयः प्रतीयते । सेयं क्रियावैकल्यवती विशेषोक्तिः ॥

**न रथा न च मातङ्गा न हया न च पत्तयः ।**
**स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ ३२७॥**

*A*. नेति । रथादिद्रव्यवैकल्येऽपि स्त्रीणाम् अपाङ्गदृष्ट्यैव जगतां त्रयं जीयते इति कार्यातिशयः ॥

*B*. द्रव्यवैकल्येन यथा—नेति । अत्र रथादिद्रव्यवैकल्येऽपि स्त्रीणाम् अपाङ्गालोकनं त्रीण्यपि जगन्ति विजयते इति द्रव्यवैकल्यवती विशेषोक्तिः ॥

---

१ 'ध्वस्तं' इति पा० । २ 'बलम्' इति पा० ।

**एकचक्रो रथो यन्ता विकलो विषमा हयाः ।**
**आक्रामत्येव तेजस्वी तथाप्यर्को नभस्तलम्[1] ॥ ३२८॥**

**सैषा हेतुविशेषोक्तिस्तेजस्वीति विशेषणात् ।**
**अयमेव क्रमोऽन्येषां भेदानामपि कल्पने॥३२९॥**

*A.* एकेति । एतद्व्याचष्टे—सैषेति ॥

*B.* द्रव्यस्य अङ्गादिवैकल्येन यथा—एकेति । अत्र रथादीनां द्रव्याणाम् अवयवादिवैकल्येऽपि जगत्त्रयजयेन सवितुः अनुभावातिशयः प्रतीयते इति द्रव्याङ्गादिवैकल्यवती विशेषोक्तिः। तेजोविशिष्टस्य सूर्यलक्षणस्य द्रव्यस्य अनुभावप्रदर्शनार्थं रथाद्यवयववैकल्यकथनात् हेतुविशेषोक्तिश्च । इदमाह—सैषेति । उक्तेन प्रकारेण परेऽपि विशेषोक्तिभेदा द्रष्टव्याः ॥

इति विशेषोक्तिचक्रम्

**विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित् ।**
**कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ ३३०॥**

---

१. 'जगत्त्रयम्' इति पा० ।

*A.* तुल्ययोगितां लक्षयति—विवाक्षितेति ॥

*B.* तुल्ययोगितालङ्कारमाह—विवक्षितेति । वक्तुमिष्टस्य गुणाश्रयतया प्रसिद्धैः समीकृत्य कस्यचित् अप्रसिद्धस्य कीर्तनं स्तुतिनिन्दासिद्ध्यर्थं तुल्ययोगिता ॥

**यमः कुबेरो वरुणः सहस्राक्षो भवानपि ।**
**बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥**
**३३१॥**

*A.* स्तुत्यर्थां तुल्ययोगितां दर्शयति—यम इति ॥

*B.* उदाहरति—यम इति । अत्र यमादयः पञ्च भवन्तो लोकपालाः इत्युक्ते, अनुक्तमपि तुल्ययोगितयैव कस्यचित् लोकपालैः सादृश्यं प्रतीयते, इति तुल्ययोगिता स्तुत्यर्था ॥

**सङ्गतानि मृगाक्षीणां तटिद्विलसितानि च ।**
**क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥**
**३३२॥**

*A.* निन्दार्थां तुल्ययोगितां दर्शयति—सङ्गतानीति ॥

*B.* निन्दार्थामुदाहरति—सङ्गतानीति । अत्र चञ्चलतया

प्रसिद्धैः क्षणद्युतिभिः समीकृत्य मृगीदृशां सङ्गतानि निन्दार्थम् अभिहितानि । सेयं निन्दार्थतुल्ययोगिता ॥

इति तुल्ययोगिता

**विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।**
**विरोधदर्शनायैव[1] स विरोधः स्मृतो यथा ॥३३३॥**

*A.* विरोधोक्तिं लक्षयति—विरुद्धानामिति । विरुद्धानां क्रियार्थानां गुणानां संसर्गप्रकारः, विरोधदर्शनायैव विरोधप्रतिभासायैव, विरोधः ॥

*B.* विरोधालङ्कारमाह—विरुद्धानामिति । विरुद्धानां संसर्गाभावात् संसृष्टवद्वदता समानतैव उपचारवृत्त्या संसर्ग इत्युच्यते । विरोधदर्शनाय इत्यत्रापि उपचारेण विरोधाभासः प्रतिपाद्यते । उक्तञ्च वामनादिभिः 'विरुद्धाभासत्वं विरोधः' इति । अवधारणेन आत्यन्तिकाविरोधो निवर्त्यते । यदाश्रयो विरोधाभासः स विरोधः इति तत्रापि उपचारः ॥

**कूजितं राजहंसानां वर्धते मदमञ्जुलम् ।**
**क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥३३४॥**

*A.* कूजितमिति । अत्र वृद्धिक्षययोः क्रिययोः विरुद्धाभासः॥

---

१. 'साधनायैव' इति पा० ।

*B*. उदाहरणानि—कूजितमिति । ऋतुसन्धिवशेन जायमानकालविशेषव्यवस्थितोल्लासयोः हंसमयूरालापयोः संसृष्टिः विरोधाभासं जनयतीति, सहावस्थानलक्षणो विरोध एषः ॥

**प्रावृषेण्यैर्जलधैररम्बरं दुर्दिनायते ।**
**रागेण पुनराक्रान्तं जायते जगतां मनः ॥३३५॥**

*A*. प्रावृषेण्यैरिति । दुर्दिनशब्देन श्यामत्वं लक्ष्यते । अत्र श्यामत्वरक्तत्वयोः विरोधः ॥

*B*. प्रावृषेण्यैरिति । समवायिकारणस्य हि कार्येण सह अवस्थानं दृश्यते । तत्कारणान्तरेऽपि उपचारात् आरोप्यमाणसमवायिकारणभावस्य जलधरस्य कार्यभूतस्य रागस्य च सहानवस्थानं विरोधाभासः । इति सहानवस्थानलक्षणो विरोधः । पूर्वत्र तु कार्यद्वयस्य, अत्र कार्यकारणयोः, इति भेदः ॥

**तनुमध्यं पृथुश्रोणि रक्तोष्ठमसितेक्षणम् ।**
**नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम् ॥**
**३३६ ॥**

*B*. तन्विति । अत्र तनुत्वादीनां पृथुत्वादीनामेकद्रव्याश्रयेण विरोधाभासः इति गुणनिबन्धनः प्रागुक्तविरोधः ॥

**मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम् ।**

अपि ते रूपमस्माकं तन्वि तापाय कल्पते ॥
३३७ ॥

*B.* मृणालेति । कारणगुणप्रक्रमेण कार्ये गुणारम्भः इति हि प्रसिद्धिः । अत्र मृणालादित्वेन रूपितैः अवयवैः उपेतस्य शैत्यगुणाश्रयकारणभूतस्य रूपस्य विसदृशं कार्यं स्वविषये जातमिति कामिना व्याहृतत्वात् विरोधाभासः । इति विसदृशकार्यकारणलक्षणो विरोधः ॥

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदश्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने ॥
३३८ ॥

*B.* उद्यानेति । पांसूनां स्पर्शनद्वारा बाष्पजनकत्वं स्वभावः। अत्र उद्यानचूतचम्पकरेणवः स्पर्शराहित्येऽपि पान्थबाष्पहेतवः इति विरोधाभासः । स्वभावविरोधलक्षणलक्षणो विरोध एषः ॥

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥
३३९ ॥

*A.* कृष्णेति । अत्र विरुद्धपक्षपातित्वं विरोधः ; कृष्णपार्थयोः रक्ता या श्रूयते सा कर्णपक्षपातिनी न भवेत् । कृष्णा धव-

ला रक्ता च कर्णान्तायता च दृष्टिः इति श्लेषोपहितो विरोधः ॥

*B.* कृष्णोति । अत्र श्लेषद्वारेण विरोधाभासः इति श्लेषानुविद्धो विरोध एषः ॥

**इत्यनेकप्रकारोऽयमलङ्कारः प्रतीयते ।**

*B.* उपसंहरति—इतीति ॥

इति विरोधालङ्कारः

**अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः॥२४०॥**

*A.* अप्रस्तुतप्रशंसां लक्षयति—अप्रस्तुतेति ॥

**सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।**
**अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥ २४१ ॥**[1]

**सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ।**
**राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ॥ २४२ ॥**

*A.* उदाहरति—सुखमिति । एतद्व्याचष्टे—सेति ॥

इति अप्रस्तुतप्रशंसा

**यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता ।**

---

१. 'अर्थैः' इति पा० ।

**दोषाभासा गुणा एव लभन्ते ह्यत्र सन्निधिम् ॥**
**३४३ ॥**

*A*. व्याजस्तुतिं लक्षयति—यदीति ॥

**तापसेनापि रामेण जितेयं भूतधारिणी ।**
**त्वया राज्ञापि सैवेयं जिता मा भून्मदस्तव॥३४४॥**

*A*. उदाहरति—तापसेनेति । परशुरामेण यावती भूमिः जिता सा सर्वा त्वया जिता इति प्रशंसा ॥

*B*. उदाहरति—तापसेनेति । चतुरङ्गबलशून्येनापि रामेण विजिता भूतधारिणी। चतुरङ्गबलयुक्तेनापि राज्ञा सैव जिता। इति निन्दामुखेन वर्णनीयस्य महीयसा रामेण साम्योपपादनं स्तुतिः भवति इति व्याजस्तुतिः ॥

**पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते ।**
**राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते॥३४५॥**

*A*. पुंस इति । पुरुषोत्तमे इव त्वयि लक्ष्मीः आसक्ता इति स्तुतिः । उदाहरणद्वयं व्याप्तिप्रदर्शनार्थम् ॥

*B*. पुंस इति । परदारापहारलक्षणनिन्दाव्याजेन वर्णनीयविषयायाः स्तुतेः विहितत्वात् व्याजस्तुतिः ॥

**भुजङ्गभोगसंसक्ता कलत्रं तव मेदिनी ।**
**अहङ्कारः परां कोटिमारोहति कुतस्तव ॥३४६॥**

*A.* श्लेषानुविद्धव्याजस्तुतिं दर्शयति—भुजङ्गेति । त्वद्भुजः शेषधृतामखिलां भुवं बिभर्ति इति स्तुतिः ॥

*B.* भुजङ्गेति । धूर्तभोगनिरता मेदिनी तव भार्या इति निन्दाव्याजेन शेषशिरसा धार्यमाणा भूतधात्री तव कुटुम्बिनी इति स्तुतिः व्याजस्तुतिः । एषा श्लेषायत्ता ज्ञातव्या ॥

**इति श्लेषानुविद्धानामन्येषाञ्चोपलक्ष्यताम् ।**
**व्याजस्तुतिप्रकाराणामपर्यन्तः प्रविस्तरः ॥३४७॥**

*A.* व्याजस्तुतिमुपसंहरति—इतीति ॥

*B.* अनेन प्रकारेण श्लेषानुविद्धा बहवो व्याजस्तुतिप्रकारा ज्ञातव्या इत्याह—इतीति ॥

इति व्याजस्तुतिः

**अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् ।**
**सदसद्वा निदर्श्येत यदि स्यात्तन्निदर्शनम् ॥३४८॥**

*A.* निदर्शनं लक्षयति—अर्थेति । एकमर्थविशेषं वर्णयता

तत्सदृशम् अभ्युदयरूपमनर्थरूपं वा यदि निर्दिश्यते तन्निदर्शनम् ॥

**उदयन्नेष[१] सविता पद्मेष्वर्पयति श्रियम् ।**
**विभावयितुमृद्धीनां[२] फलं सुहृदनुग्रहम् ॥ ३४९ ॥**

*A.* सन्निदर्शनं दर्शयति—उदयान्निति ॥

*B.* उदाहरति —उदयान्निति । समर्थेन सुहृदाम् अनुग्रहः कर्तव्यः इत्येतत्, अर्थान्तरप्रवृत्तेन निदर्शितं, किञ्चित् तत्सदृशं फलम् । सूर्यः अभ्युदयमानः सुहृत्सु पद्मेषु श्रियम् अर्पयतीति प्रक्रान्तसदृशस्य फलस्य प्रदर्शनात् उक्तलक्षणं निदर्शनमेतत् ॥

**याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम् ।**
**सद्यो राजविरुद्धानां सूचयन्ती दुरन्तताम् ॥ ३५० ॥**

*A.* असन्निदर्शनं लक्षयति—यातीति । राजविरुद्धानामिति श्लेषानुविद्धम् ॥

*B.* यातीति । अत्र राजविरोधो न कर्तव्यः इति अर्थान्तरे प्रवृत्तेन, चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवं यातीति, पराभवे तस्य राजशब्दवाच्यचन्द्रविरोधः कारणत्वेन अभिहितः । इति

---

१. 'एव' इति पा०। २. 'विभावयन् समृद्धीनाम्' इति पा० ।

श्लेषमुखेन प्रक्रान्तसदृशस्य फलस्य प्रदर्शनात् उक्तलक्षणं निदर्शनमेतत् । श्लेषमुखेनापि निदर्शनं प्रतिपाद्यमिति यावत् ॥

इति निदर्शनचक्रम्

**सहोक्तिः सहभावस्य कथनं गुणकर्मणाम् ।**
**अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता ॥**
**३५१ ॥**

*A*. सहोक्तिपरिवृत्ती लक्षयति—सहेति । गुणस्य कर्मणो गुणकर्मणोर्वा द्वयोः सहभावकथनं सहोक्तिः ॥

*B*. सहेति । किञ्चित् दत्त्वा ततः तत्सदृशस्य कस्यचित् आदानं विनिमयः । सहभावस्य कथनं गुणकर्मणाम्—इत्यस्य गुणक्रियाणां कर्त्रादिभिः सहभावकथनमित्यर्थः ॥

**सह दीर्घा मम श्वासैरिमाः[2] सम्प्रति रात्रयः ।**
**पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः॥३५२॥**

*A*. गुणसहोक्तिं दर्शयति—सहेति ॥

*B*. अत्र रात्रयो दीर्घाः पाण्डुराश्च इति दीर्घपाण्डुरगुणयोः श्वासैः अङ्गैश्च समावेशो दृश्यते इति सहोक्तिः ॥

---

१. '५५' इति पा० । २. 'प्राणैः' इति पा० ।

**वर्धते सह पान्थानां मूर्छया चूतमञ्जरी ।**

**वहन्ति च समं तेषामसुभिर्मलयानिलाः॥२५३॥**

*A*. क्रियासहोक्तिं दर्शयति—वर्धते इति ॥

*B*. वर्धते इति । अत्र चूतमञ्जरी पान्थमूर्छनया सह वर्धनाक्रियायां, मलयानिलः असुभिः समं वहनाक्रियायां, सम्बद्धौ इति क्रियोपज्ञेयं सहोक्तिः ॥

**कोकिलालापसुभगाः सुगन्धिवनवायवः ।**

**यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः॥२५४॥**

*A*. गुणाक्रियासहोक्तिं दर्शयति—कोकिलेति । वृद्धिरूपस्य गुणस्य व्याप्तिरूपस्य कर्मणश्च तुल्यतया वचनात् एषा गुणाक्रियासहोक्तिः ॥

*B*. कोकिलेति । अत्र सुरभिवासराः जनानन्दैः सह वृद्धिक्रियायामेकस्यां निविष्टा इति सहोक्तिभेदः । पूर्वास्मिन् एकस्य क्रियाद्वये निवेशः ॥

**इत्युदाहृतयो दत्ताः सहोक्तेरत्र काश्चन ।**

*B*. इतीति । सहोक्तेः अनेकाः प्रकाराः; केचिदेव प्रकारा दर्शिताः ॥

इति सहोक्तिः

क्रियते परिवृत्तेश्च किञ्चिद्रूपनिरूपणम् ॥३५५॥
शस्त्रप्रहारं ददता भुजेन तव भूभुजाम् ।
चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम्॥३५६॥

*B.* परिवृत्त्युदाहरणं दर्शयति—शस्त्रेति । सुबोधमेतत् ॥

इति परिवृत्तिः

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।
पातु नः[1] परमं ज्योतिरवाङ्मानसगोचरम्॥३५७॥

*B.* आशीरिति । अप्राप्तस्य अभीष्टस्य आशंसनम् आशीः। सा च अनुकूला अननुकूला इति द्विधा । अनुकूलाशीर्नाम यो यच्छास्त्रमारभते तस्य तच्छास्त्राभिद्योतकार्थाशंसनम् । यथा—

"कोऽसि त्वं मे का वाहं ते विसृज विसृज मम वसनं मुखं किमवेक्षसे
न व्यङ्गाहं जाने ही ही तव सुभगदशनवसनं प्रियादशनाङ्कितम् ।
या ते रुष्टा सा ते नाहं व्रज चपल हृदयनिलयां प्रसादय कामिनीम्
इत्येवं कन्दर्पेणार्ताः प्रणयकलहकुपितपतीन् वदन्ति परस्त्रियः ॥"

---

१. 'वः' इति पा० ।

इत्यादयः अनुकूला आशिषः । शास्त्रस्य अननुकूलार्थाशंसनं यथा—

" आयूंषि श्रियमारोग्यं पुत्रं मित्राणि बन्धुताम् ।
ददद्भक्तिश्च भवतु भवतामीशवन्दनम् ॥"—इत्यादयः ।

केचित् आदौ मङ्गलशब्दयुक्तां कुर्वन्ति। तद्यथा—

" श्रियं दधतु वः शौरेर्द्वये तुल्यश्रमाः क्रमाः ।
ये चादौ गोष्पदं पश्चात् त्रैलोक्यं कामतश्च ये ॥"—इत्यादयः ।

केचित् इतरोपेतामपि आशिषं प्रयुञ्जते । इतरोपेतां नमस्कारोपेताम् इत्यर्थः। यथा—

" नमः शिवाय कल्याणहारिणे भोगिहारिणे ।
संसारसागरोत्तारसेतवे मुक्तिहेतवे ॥"—इत्यादयः ।

केचन वर्तमानपदेनापि आशिषमाचक्षते । यथा—

" जयति स भगवान् कृष्णः शेते यः शेषभोगशय्यायाम्।
मध्ये पयःपयोधेरपर इवाम्भोनिधिः कृष्णः॥"—इत्यादयः ।

एतासु मङ्गलशब्दयुक्तेतरोपेतवर्तमानपदप्रतिपाद्यासु आशीस्सु अननुकूलभेदाः द्रष्टव्याः । मङ्गलशब्दयुक्ताननुकूलाशीः यथा—

" शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु शान्तिं सर्वत्र जनः सुखी भवतु ॥"

इतरोपेताननुकूलाशिषि यथा—“ रागादिरोगान् सतता-नुषक्तान्”—इत्येवमादयः । वर्तमानपदाननुकूलाशिषि यथा—

“त्रगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति ललितलीलानाटिकासूत्रधारः ॥”—इत्यादयः ।

केचित् परहिताशंसनमपि निजहिताशंसनं भवतीति आशिषं प्रयुञ्जते । तद्यथा—

“ प्रभातकाले युष्माकमुन्मीलयतु लोचने ।
दिवाकरः करैस्ताम्रैः सुप्ताब्जं सरसामिव ॥ ”

केचित् मङ्गलशब्द एव सर्वाशिषम् आशास्ते इति मङ्गल-शब्दमाशंसन्ति । यथा—“अथातो धर्मजिज्ञासा”—इत्येवमादयः ॥

इत्याशीः

**अनन्वयससन्देहावुपमास्वेव दर्शितौ ।**
**उपमारूपकञ्चापि रूपकेष्वेव दर्शितम् ॥३५८॥**

*A*. भामहेन अनन्वयः, सन्देहः, उत्प्रेक्षावयवोऽपि च, त्रयो-ऽलङ्कारा दर्शिताः । तेषाम् उपमोत्प्रेक्षयोः अन्तर्भावः इत्याह—अनन्वयेति । त्वन्मुखं त्वन्मुखेन तुल्यम् इत्यनन्वयः; सा असा-

धारणोपमेत्युक्ता । ससन्देहः संशयोपमेत्युक्ता । उत्प्रेक्षावयवः उत्प्रेक्षाभेद एव द्रष्टव्यः ॥

*B*. अनन्वयेति । अनन्वयससन्देहौ उपमास्वेवदर्शितौ । अनन्वयशब्देन विरोध उच्यते, सन्देहशब्देन संशयः । संशय-शब्दः यथार्थज्ञानव्यतिरिक्ततया सन्देहतुल्यः; भ्रमः इति यावत् । ससन्देहशब्देन संशयसहितो भ्रमः कथ्यते । उपमास्वेव इत्यत्र बहुवचनेन विरोधसंशयभ्रमाः त्रयोऽपि सूच्यन्ते । विरोधोपमायां विरोधः, संशयोपमायां संशयः, मोहोपमायां भ्रमश्च प्रदर्शितः । उपमारूपकञ्चापि रूपकेष्वेवदर्शितम्—उपमारूपकयोः संभेदो दर्शितः ॥

**उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च ।**
**नानालङ्कारसंसृष्टेः संसृष्टिस्तु निगद्यते॥ ३५९॥**

*A*. संसृष्टिं लक्षयति—नानेति ॥

*B*. उत्प्रेक्षेति । अत्र—

"अङ्गुलीभिरिव केशसञ्चयं
सन्निगृह्य तिमिरं मरीचिभिः ।
कुट्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥"

इति वत् अस्माभिः अनुदाहृतेषु एवंप्रायेषु उत्प्रेक्षावयवत्वमेव सङ्कीर्णता । तस्मात् उत्प्रेक्षावयवोऽपि उत्प्रेक्षाभेद एव । विरोधोपमादयोऽपि उपमाभेदा एव । उपमारूपकञ्च रूपकभेद एव, न तु सङ्कीर्णमित्यभिप्रायः । भ्रमव्युदासाय एवमुक्तम् । संसृष्टयलङ्कारमाह—नानेति । अत्र तुशब्देनापि विरुद्धोपमदीनां सङ्कीर्णता निवर्त्यते ॥

**अङ्गाङ्गिभावसंस्थानं[1] सर्वेषां समकक्ष्यता ।**
**इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ ३६० ॥**

*A.* अलङ्कारसंसृष्टिद्वैविध्यमाह—अङ्गेति ॥

**आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।**
**कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ३६१ ॥**

*A.* संसृष्टिमुदाहरति—आक्षिपन्तीति । मुग्धे अरविन्दानि ते मुखश्रियम् आक्षिपन्तीति उपमा, कोशदण्डसमग्राणामेषां किं दुष्करम् इत्यत्र अर्थान्तरन्यासश्च, समकक्ष्यौ । कोशदण्डसमग्राणाम् इत्यत्र मुकुलनालसनाथानाम् इत्यर्थः, सधनबहुबलानाम् इत्यर्थश्च, श्लिष्टौ । बलवतां किं दुष्करमस्तीति श्लेषः अर्थान्तर-

---

१ 'अवस्थानम्' इति पा० ।

न्यासस्य अङ्गभावेन अवतिष्ठते । ननु एषां दुष्करमित्यत्र कर्तरि षष्ठी न प्राप्नोति, 'न लोकाव्यय–' इति प्रतिषेधात् इति चेत्, नेयं कर्तरि षष्ठी, येन प्रतिषेधः स्यात्; किन्तु अत्र सम्बन्धमात्रे षष्ठी, एषां सम्बन्धि कृत्यं किं दुष्करम् इति। अत्र सा श्लेषस्य अङ्गभावं द्योतयति ॥

*B.* उदाहरति—आक्षिपन्तीति । अत्र श्लेषोपसर्जनः अर्थान्तरन्यासः । भवन्ति च अरविन्दानि कोशदण्डसमग्राणि ; तेन तेषां न किञ्चित् अशक्यम् । इति श्लेषद्वारेण अर्थं समर्थयन्तम् अर्थान्तरन्यासं प्रति प्रस्तुतसाध्यवस्तुविशेषकतया स्थिताया उपमायाः अङ्गिभावो ज्ञायते । समकक्ष्यताया अपि उदाहरणमन्यत्र द्रष्टव्यम् । तच्च ईदृशम्—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥**

अत्र उत्प्रेक्षायाः उपमायाश्च समकक्ष्यतैव ॥

## श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् ।
## भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥ ३६२ ॥

*A.* श्लेष इति । स्वव्याख्यानव्यतिरिक्ता सर्वा अलङ्कृतिः वक्रोक्तिः इति उच्यते ॥

*B.* श्लेष इति। श्लेषो न केवलम् अर्थान्तरन्यासे एव, सर्वासु वक्रोक्तिष्वपि, श्रियं जनयति । वाङ्मयस्य द्वैविध्यं दर्शयति--भिन्नमिति । स्वभावोक्तिः आद्यालङ्कारः; वक्रोक्तिशब्देन उपमादयः सङ्कीर्णपर्यन्ता अलङ्कारा उच्यन्ते ॥

**भाविकं तमिति प्राहुः प्रबन्धविषयं गुणम् ।**
**भावः कवेरभिप्रायः काव्येष्वस्य व्यवस्थितिः ॥ ३६३ ॥**

**परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।**
**विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥ ३६४ ॥**

**व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ।**
**भावायत्तमिदं सर्वमिति तद्भाविकं विदुः॥३६५॥**

*A.* भाविकं लक्षयति—भाविकं तमिति । भावः कवेः अभिप्रायः; तेन निर्वृत्तं प्रबन्धव्याप्तं गुणं भाविकं प्राहुः । काव्योपात्तानां भूधरादिवर्णनानां परस्परानुकूलत्वम्, अकिञ्चित्करस्य विशेषणस्य अकरणम्, अपेक्षितस्थाने विशेषकरणम्, गम्भीरस्य अर्थस्य श्लेषेण प्रकाशनम्—उपलक्षणमेतत्; लक्ष्मीश्रीशब्दादिबन्धचिह्नम् इत्यादि सर्वं भाविकं विदुः ॥

*B*. भाविकं तमिति। काव्यशरीरगोचरधर्माः कवेः अभिप्रायाधीनाः। भाविकालङ्कारस्तु महाकाव्येष्वेव नियमेनावस्थितः॥

**यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदञ्चेष्टमलङ्कारतयैव नः॥ ३६६॥**

*A*. किमियन्त एव अलङ्काराः? नेत्याह—यदिति। ये मुखं, प्रतिमुखं, गर्भः, अवमर्शः, निर्वहणम्, इति पञ्च सन्धयः; तेषाम् उपक्षेपपरिकरादीनि अङ्गानि; कैशिकी, आरभटी, सात्वती, भारती, इति चतस्रो वृत्तयः; तासाम् अङ्गानि नर्मतास्फिञ्जतत्स्फोटादीनि। लक्षणं विभूषणञ्च अक्षरसंहतिश्च। आगमान्तरे भरते॥

*B*. तदुपपादयति यदिति। आगमान्तरे लक्षणान्तरे—मुखं, प्रतिमुखं, गर्भः, अवमर्शः, उपसंहारः, इत्येते सन्धयः; उपक्षेपादीनि गर्भसन्ध्यङ्गानि, अपवादादीनि अवमर्शसन्ध्यङ्गानि, सन्ध्यादीनि निर्वहणसन्ध्यङ्गानि; कैशिकी, आरभटी, सात्वती, भारती, चेति चतस्रो वृत्तयः; नर्मनर्मस्फिञ्जनर्मस्फोटनर्मगर्भाः कैशिक्यङ्गानि; संक्षिप्तकः, अवपातः, वस्तूत्थापनं, संस्फोटः, इति आरभट्यङ्गानि; उत्थापिकः, परिवर्तकः, संघातकः, इति सात्वत्यङ्गानि; प्ररोचना, प्रस्तावना, वीथी, प्रहसनम्, इति भारत्यङ्गानि। आदिशब्देन पताकादीनि गृह्यन्ते। तत् अलङ्कारतया इष्टम् इत्यर्थः। च-शब्देन शास्त्रान्तरसिद्धः रसविषये वृत्तिनियमोऽपि

भूषणतया ग्राह्यः इत्यर्थः । वृत्तिनियमोऽपि एवम्—

श्रृङ्गारे चैव हास्ये च वृत्तिः स्यात् कैशिकी तथा ।
सात्वती चापि विज्ञेया वीराद्भुतरसाश्रया ।
रौद्रे भयानके चैव वृत्तिरारभटी भवेत् ।
बीभत्से करुणे चैव भारती वृत्तिरिष्यते ॥

**पन्थाः स एष विवृतः परिमाणवृत्त्या**
**संक्षिप्य विस्तरमनन्तमलङ्क्रियाणाम् ।**
**वाचामतीत्य विषयं परिवर्तमाना-**
**नभ्यास एव विवरीतुमलं विशेषान् ॥३६७॥**

*A*. पन्था इति । उपमारूपकाक्षेपादिदर्शितप्रपञ्चन्यायेन अन्येष्वपि अलङ्कारेषु अन्तर्भेदाः ऊहनीयाः । तल्लक्षणाभ्यास एव तान् विवृणोति ॥

इति तरुणवाचस्पतिकृतायां काव्यादर्शटीकायां द्वितीयः परिच्छेदः

---

*B*. एते स्थूलरूपा एव दर्शिताः; सूक्ष्माः पुनरलङ्काराः अभ्यासवशेन ज्ञायन्ते इतीदमाह—पन्था इति । उक्तेषु लक्षणान्तरेषु दर्शितानामन्येषाम् अन्तर्भावः इति यावत् ॥

इति दण्ड्यलङ्कारव्याख्याने हृदयंगमे अर्थालङ्कारविभागो
नाम द्वितीयः परिच्छेदः

## अथ शब्दालङ्काराः

**अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः ।**

**यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ १ ॥**

*A.* प्रथमपरिच्छेदे वर्णावृत्तिरूपानुप्रासकथने—'आवृत्तिं वर्णसङ्घातगोचरां यमकं विदुः । तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते'—इत्युक्तम् । द्वितीयपरिच्छेदे एतद्व्यतिरिक्ताः सर्वे अलङ्कारा दर्शिताः । अवसरप्राप्तोऽयम् अलङ्कारः प्रपञ्च्यते । यमकं लक्षयति—अव्यपेतेति । अत्र विभिन्नार्थायाः वर्णसंहतेः आवृत्तिः भवति यमकम् । विभिन्नेतिविशेषणाभावे लाटानुप्रासे अतिव्याप्तिः स्यात् । विशेषणयोगेऽपि एकवर्णावृत्तिपरम्परायाम् अव्याप्तिः स्यात्; यथा—

विविधधववना नागगर्धर्धनाना-
विविततगगना नाममज्जज्जनाना ।
रुरुशशललना नाववन्धुन्धुनाना
मम हि हिततनानाननस्वस्वनाना ॥

इत्येकवर्णावृत्तिरूपस्य यमकस्य विद्यमानत्वात् वर्णसंहतेः आवृत्तिरिति प्रयोगबाहुल्यात् उक्तमिति न अव्याप्तिः । वर्णान्तरैः अव्यवहिता अव्यपेता; वर्णान्तरैः व्यवहिता व्यपेता ॥

**एकद्वित्रिचतुष्पादयमकानां विकल्पनाः ।**

**आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥ २ ॥**

*A.* स्थानविकल्पनानि आह—एकेति । प्रथमपादे द्वितीयपादे तृतीयपादे चतुर्थपादे इति एकपादादियमकभेदाः चत्वारः। प्रथमाद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः द्वितीयतृतीययोः द्वितीयचतुर्थयोः तृतीयचतुर्थयोः इति द्विपादादियमकभेदाः षट्। प्रथमाद्वितीयतृतीयेषु प्रथमाद्वितीयचतुर्थेषु प्रथमतृतीयचतुर्थेषु द्वितीयतृतीयचतुर्थेषु इति त्रिपादादियमकभेदाःचत्वारः। चतुष्पादादियमकम् एकम् । इति पादादिभेदस्य पञ्चदश भेदाः । एवं मध्ययमकस्य अन्तयमकस्य आदिमध्ययमकस्य आद्यन्तयमकस्य मध्यान्तयमकस्य आदिमध्यान्तयमकस्य च । इति सप्तानां प्रत्येकं पञ्चदशेति पञ्चाधिकशतम् अव्यपेतस्य । तथा व्यपेतस्य ॥

**अत्यन्तबहवस्तासां भेदाः सम्भेदयोनयः ।**

**सुकरा दुष्कराश्चैव वर्ण्यन्ते[1] तत्र केचन ॥ ३ ॥**

*A.* अतीति । तासां सम्भेदयोनयः परस्परमिश्रणेन जाताः भेदाः वक्तुं न शक्यन्ते । तत्र अव्यपेतव्यपेतयोः, अव्यपेते व्यपेते च, सुकराः दुष्कराश्च केचन वर्ण्यन्ते॥

यत्स्यादपुनरुक्ताय पुनरुक्तमनन्तरम् ।

पदानामक्षराणां वा स्यात्तद्यमकलक्षणम् ॥

---

१. ' दर्श्यन्ते ' इति पा० ।

तदादिमध्यान्तसमानपादव्युत्क्रान्तसामुद्गसमाह्वयानि ।
आद्यन्तमन्तादि च काव्ययोगेष्वष्टौ समासाद्यमकान्युशन्ति ॥

**मानेन मानेन सखि प्रणयो भूत्प्रिये जने ।**
**खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥४॥**

*A*. एकपादादियमकानि चतुर्भिरुदाहरणैर्दर्शयति—मानेनेति । सखि प्रियजने सापराधे अनेन मानेन सह प्रणयो मा भूत् । तस्मिन् अन्यासक्ते ज्ञातेऽपि, तत् अनादृत्य स्वयमेव कण्ठमाश्लिष्य तमेव सत्रपं कुरु, इति प्रसादिता सख्या नायिका ॥

**मेघनादेन हंसानां मदनो मदनोदिना ।**
**नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥५॥**

*A*. मेघेति । हंसानां मदनोदिना हर्षहारिणा मेघनादेन प्रेरितमानं स्त्रीणां मनः सह रत्या मदनो विगाहते । प्रावृषि मानिन्यः त्यक्तमानाः स्वयमेव रत्यै प्रवृत्ताः इत्यर्थः ॥

**राजन्वत्यः प्रजा जाता भवन्तं प्राप्य संप्रति ।**
**चतुरं चतुरम्भोधिरशनोर्वीकरग्रहे[1] ॥ ६ ॥**

*A*. राजन्वत्य इति । अत्र राजन् इति पदमध्याहार्यम् ॥

---

१. 'पारिग्रहे' इति पा० ।

अरण्यं कैश्चिदाक्रान्तं कैश्चित्[1]सद्म दिवौकसाम् ।
पदातिरथनागाश्वरहितैरहितैस्तव ॥ ७ ॥

*A.* अरण्यमिति । सुगमम् ॥

मधुरं मधुरम्भोजवदने वद नेत्रयोः ।
विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किन्नु ते ॥८॥

*A.* द्विपादादियमकानि षड्भिरुदाहरणैर्दर्शयति—मधुरमिति । हे अम्भोजवदने तव नेत्रयोः मधुरं विभ्रमं भ्रमरभ्रान्त्या मधुमासो विडम्बयाति किनु ? वद । किमिति आक्षेपे ; अनुकर्तुं न शक्नोतीति प्रियचाटुः ॥

वारणो वा रणोद्दामो हयो वा स्मर दुर्धरः ।
न यतो नयतोऽन्तं[2] नस्तदहो विक्रमस्तव ॥ ९ ॥

*A.* वारण इति । हे स्मर अस्मान् अन्तं नयतः प्रापयतः तव रणोद्दामो वारणो वा, दुर्धरो हयो वा, नास्ति । वाशब्दश्चार्थे । यतः यस्मात्, तत् तस्मात्, तव विक्रमः अहो विस्मयनीयः ॥

राजितैराजितैक्ष्ण्येन जीयते त्वादृशैर्नृपैः ।

---

१. ‘ अन्यैः ’ इति पा० । २. ‘ अस्तम् ’ इति पा० ।

**नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥**

*A*. राजितैरिति । आजितैक्ष्ण्येन समरपाटवेन राजितैः शोभितैः त्वादृशैः नृपैः वसुधा जीयते; पुनः वसुधारया तृप्तिं नीयते च । इति कस्याचित् समरवीरस्य दानवीर्यकथनम् ॥

**करोति सहकारस्य कलिकोत्कलिकोत्तरम् ।**
**मन्मनो मन्मनो ह्येषं मत्तकोकिलनिस्वनः॥११॥**

*A*. करोतीति । सहकारस्य कलिका मञ्जरी मन्मनः मच्चित्तम् उत्कलिकोत्तरम् उत्कण्ठाबहुलं करोति ; मन्मनः मथनं मन्यमानः पीडाकरः इत्यर्थः ; एष मत्तकोकिलनिस्वनश्च करोति॥

**कथं त्वदुपलम्भाशाविहताविह तादृशीम्[2] ।**
**अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ॥ १२ ॥**

*A*. कथमिति । इह वसन्ते त्वत्प्राप्त्याशायाः विहतौ विघाते तादृशीं स्मरार्ताम् अङ्गनाम् अङ्गनाशिनी अवस्था कथं नारोहेत् ? सा मरिष्यत्येवेत्यर्थः ॥

**निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।**

---

१. ' अप्येष ' इति पा० । २. ' तादृशी ' इति पा० ।

तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः॥१३॥

*A*. निगृह्येति । बालपल्लवशोभिना तरुणा चूतादिना, आकृष्टान् स्वाभिमुखीकृतान् तरुणान्, नलिनोन्मुखाः कमलवनचारिणः अलिनः भृङ्गाः, नेत्रे निगृह्य, कर्षन्ति स्वाभिमुखान् कुर्वन्ति ॥

विशदा विशदामत्तसारसे सारसे जले ।
कुरुते कुरुतेनेयं हंसी मामन्तकामिषम् ॥ १४ ॥

*A*. त्रिपादयमकानि चत्वारि दर्शयति—विशदेत्यादिना। अन्तःप्रविशदामत्तसारसपक्षिणि सारसे सरःसम्बन्धिनि जले स्थिता, विशदा इयं हंसी, कुरुतेन श्रवणपरुषेण रवेण मामन्तकामिषं कुरुते; पीडयति इत्यर्थः ॥

विषमं विषमन्वेति मदनं मदनन्दनः ।
सहेन्दुकलयापोढमलया मलयानिलः ॥ १५ ॥

*A*. विषममिति । विषमं तीक्ष्णं, विषं सन्तं मदनं स्मरं, मदनन्दनः मम अनन्दनः अप्रियो मलयानिलः, अपोढमलया त्यक्तकलङ्कया इन्दुकलया सह, अन्वेति । मदनो मलयानिलश्चन्द्रकला च विषवत् बाधन्ते इत्यर्थः ॥

१. 'क्लिष्टान्' इति पा० ।

**मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग मे ।**
**हारिणी हारिणी शर्म तनुतां तनुतां यतः॥१६॥**

*A.* मानिनीति। हे अनङ्ग, मानिनी प्रिया, हारिणी हारवती, हारिणी मनोहारिणी, मा मां, ते तव, निषङ्गत्वं बाणतूणत्वं, निनीषुः नेतुमिच्छुः, तनुतां विरहकार्श्यं, यतः प्राप्नुवतः, मे मम, शर्म सुखं, तनुतां कुरुताम् । प्रणयकलहेन विमुखां सतीं प्रियां मयि प्रसन्नां कुरु इत्यर्थः ॥

**जयता त्वन्मुखेनास्मानकथं न कथं जितम् ।**
**कमलं कमलङ्कुर्वदलिमद्दलि मत्प्रिये ॥ १७ ॥**

*A.* जयतेति। मत्प्रिये, अस्मान् जयता त्वन्मुखेन, अलिमत् नेत्रस्थानीयभृङ्गं, दलि कपोलस्थानीयदलं, कं जलम् अलङ्कुर्वत्, अकथं मूकं, कमलं कथं न जितम्? मूकत्वात् हीनतया जितमेव ॥

**रमणी रमणीया मे पाटलापाटलांशुका ।**
**वारुणीवारुणीभूतसौरभा सौरभास्पदम् ॥ १८ ॥**

*A.* चतुष्पादयमकं दर्शयति—रमणीति। पाटलापाटलांशुका पाटलकुसुमवदरुणांशुका रमणीया मे रमणी, अरुणीभूतसौरभा

सायन्तनसमये अरुणीभूतसूर्यप्रभा, वारुणीव प्रतीचीव, सौरभा-स्पदं रम्यताभाजनं भवति ॥

**इति पादादियमकमव्यपेतं विकल्पितम् ।**
**व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन॥१९॥**

*A.* अव्यपेतं पादादियमकमुपसंहृत्य व्यपेतं पादादियमकं प्रदर्शयितुमुपक्रमते—इतीति । व्यपेतयमके एकपादयमकं न सम्भवति, आदिमध्याद्यन्तयमकत्वप्रसङ्गात् ॥

**मधुरेणदृशां मानं मधुरेण सुगन्धिना ।**
**सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ २० ॥**

*A.* ततो द्विपादयमकानुदाहरति—मधुरिति । मधुः मधुमासः मधुरेण दृष्टिहारिणा सुगन्धिना सहकारप्रसवेनैव एणदृशां मानं शब्दशेषं करिष्यति ॥

**करोऽतिताम्रो रामाणां[2] तन्त्रीताडनविभ्रमम् ।**
**करोति सेर्ष्यं कान्ते च[3] श्रवणोत्पलताडनम् ॥ २१ ॥**

---

१. ‘तत्र’ इति पा० । २. ‘नारीणाम्’ इति पा० । ३. ‘वा’ इति पा० ।

*A.* कर इति । रामाणामतिताम्रः करः तन्त्रीताडनविभ्रमं वीणावादनविभ्रमं करोति ; सागसि प्रिये सेर्ष्यं श्रवणोत्पलताडनञ्च करोति ॥

**सकलापोल्लसनया कलापिन्यानुनृत्यते ।**
**मेघाली नर्तिता वातैः सकलापो विमुञ्चति ॥ २२ ॥**

*A.* सेति । वातैः नर्तिता सकला मेघाली अपो विमुञ्चति ; सकलापोल्लसनया—कलापानां बर्हाणाम् उल्लसनेन मण्डलीकरणेन सहितया—कलापिन्या बर्हिण्या अनुनृत्यते च ॥

**स्वयमेव गलन्मानकलि कामिनि ते मनः ।**
**कलिकामिह[1] नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम् ॥ २३ ॥**

*A.* स्वयमेवेति । गलन्मानकलि प्रवसत्प्रणयकलहम् ॥

**आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम् ।**
**नृत्यत्येष [2]चलच्चारुचन्द्रकान्तः शिखावलः ॥ २४ ॥**

---

१. 'अपि' इति पा० । २. 'लसत्' इति पा० ।

*A*. आरुह्येति । चलच्चारुचन्द्रकान्तः—चलन्तः चारवः चन्द्रकान्ताः यस्य सः—शिखावलः आक्रीडशैलस्य उद्यानशैलस्य चन्द्रकान्तस्थलीमारुह्य नृत्यति ॥

**उद्धृता राजकादुर्वी ध्रियतेऽद्य भुजेन ते ।**
**वराहेणोद्धृता यासौ वराहेरुपरि स्थिता ॥ २५ ॥**

*A*. उद्धृतेति । राजकात् राजसमूहात् उद्धृता अपहृता उर्वी अद्य तव भुजेन ध्रियते । या पूर्वं वराहेण उद्धृता समुद्रात् सा वराहेः शेषस्य उपरि स्थिता स्थापिता । स्थिता इत्यत्र अन्तर्भावितण्यर्थः तिष्ठतिः । पृथिवी सकला त्वया ध्रियते इत्यर्थः ॥

**करेण ते रणेष्वन्तकरेण द्विषतां हताः ।**
**करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव॥२६॥**

*A*. अथ त्रिपादयमकानि दर्शयति—करेणेति । सुगमम् ॥

**परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।**
**परागतमिव क्वापि परागततमम्बरम् ॥ २७ ॥**

*A*. तृतीयपादराहित्येन त्रिपादयमकोदाहरणं पाठेषु न दृश्यते । परेति—परा विपक्षभूता ; अगतरुराजी पर्वतवृक्षपङ्क्तिः

वातैरिव, परा चमूः तव भटैः ध्वस्ता ; परागततं धूलिव्याप्तम् अम्बरं क्वापि परागतमिव नष्टमिव ॥

पातु वो भगवान् विष्णुः सदा नवघनच्छविः[1] ।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥ २८ ॥

*A*. पात्विति । नवघनच्छविः कालमेघकान्तिः, दानवकुलध्वंसी असुरवंशघाती, सदानवरदन्तिहा मत्तकुवलयापीडघाती, स भगवान् विष्णुः सदा वः पातु ॥

कमलेः समकेशन्ते कमलेर्ष्याकरं मुखम् ।
कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥२९॥

*A*. चतुष्पादयमकमुदाहराति—कमिति । ते तव कं शिरः अलेः भृङ्गस्य समकेशम् ; मुखं कमलेर्ष्याकरम् । कमला लक्ष्मीरिव अभिरूपा त्वं कं युवानम् उन्मदिष्णुषु अलेख्यं करोषि? शोभातिरेकेण सर्वानुन्मत्तान् करोषीत्यर्थः ॥

मुदा रमणमन्वीतमुदारमणिभूषणाः ।
मदभ्रमदृशः कर्तुमदभ्रजघनाः क्षमाः ॥ ३० ॥

---

१. 'द्युतिः' इति पा० ।

*A.* चतुष्पादयमकमेव भिन्नरूपावृत्ति त्रिभिरुदाहरणैर्दर्शयति —मुदेत्यादिना । अन्वीतं सङ्गतम्; ई गतौ इत्यस्मात् कर्तरि निष्ठा । शेषं सुगमम् । अत्र प्रथमद्वितीययोः पादयोः एका आवृत्तिः; तृतीयचतुर्थयोः एका आवृत्तिः ॥

**उदितैरन्यपुष्टानामारुतैर्मे हृतं मनः ।**
**उदितैरपि ते दूति मारुतैरपि दक्षिणैः ॥ ३१ ॥**

*A.* उदितैरिति । वसन्तकाले सापराधः सामदानादिभिः अप्रसादितप्रियः पश्चात्तापवत्या तया प्रेषितां कृतचाटुवचनां दूतीं प्रत्याह—अन्यपुष्टानां कोकिलानाम्, उदितैः जातैः, आरुतैः आरावैः, दूति तव उदितैः बचनैः, दक्षिणैः मारुतैरपि, मे मनो हृतम् । अत्र प्रथमतृतीययोः पादयोः एका आवृत्तिः; द्वितीयचतुर्थयोरेका आवृत्तिः ॥

**सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः ।**
**तनुमध्याः क्षरत्स्वेदसुराजितमुखेन्दवः ॥ ३२ ॥**

*A.* सुरेति । सुगममेतत् ॥

**इति व्यपेतयमकप्रभेदोऽप्येष दर्शितः ।**

**अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥ ३३ ॥**

*A.* व्यपेतयमकमुपसंहृत्य अव्यपेतव्यपेतादियमकं दर्शयाम इत्याह—इतीति । विकल्पो भेदः ॥

**सालं सालम्बकलिकासालं सालं न [1]वीक्षितुम् ।**
**नालीनालीनवकुलानाली नालीकिनीरपि ॥३४॥**

*A.* सेति । सा, अलं, सालम्बकलिकासालं, सालं, न, वीक्षितुम्, न, अलीन्, आलीनवकुलान्, आली, नालीकिनीः, अपि। सा आली सखी सालम्बकलिकासालम् आलम्बमानमञ्जरीश्रेष्ठ-सहितम्—सालः सारः, रलयोः अभेदात्—सालं वृक्षं चूतादिं वीक्षितुं न अलम् । आलीनवकुलान् आश्लिष्टवकुलकुसुमान् अलीन् भृङ्गान् नालीकिनीः पद्मिनीरपि वीक्षितुं नालमिति वाक्यद्वयमेतत् । अत्र प्रथमद्वितीययोः पादयोः एकमव्यपेतव्यपेतं, तृतीयचतुर्थयोः एकमव्यपेतव्यपेतम् ॥

**कालं कालमनालक्ष्यतारतारकमीक्षितुम् ।**
**तारतारम्यरसितं कालं कालमहाघनम् ॥ ३५ ॥**

---

१. 'निरीक्षितुम्' इति पा० ।

*A*. प्रथमतृतीययोरेकमव्यपेतव्यपेतं, द्वितीयचतुर्थयोरेकमव्यपेतव्यपेतमुदाहरणीयम् ; तन्न दृश्यते पाठेषु। केति–का, अलं पर्याप्ता, अनालक्ष्यतारतारकं मेघैः अदृश्यितधवलतारकं, तारतारम्यरसितम् उच्चतया अरम्यं दुस्सहं रसितं स्तानितं यस्मिन् तं, कालं मृत्युभूतं, कालमहाघनं कृष्णबृहन्मेघम्; एवम्भूतं कालं प्रावृषम्, ईक्षितुं का पर्याप्ता? सामर्थ्याद्विरहिणीति गम्यते। अत्र प्रथमचतुर्थयोः पादयोरेकमव्यपेतव्यपेतं, द्वितीयतृतीययोरेकम् ॥

**याम यामत्रयाधीनायामया मरणं निशा।**
**यामयाम धियास्वात्यायामया मथितैव सा ॥३६॥**

*A*. यामेति। विप्रोषितः प्रियः प्रावृषि स्वप्रियावस्थां विमृश्य विषीदति। याम प्राप्नुयाम, यामत्रयाधीनायामया प्रहरत्रयाधीनविस्तारया, मरणं मृतिं, निशा रात्र्या—'पद्दन्नोमास्' इत्यादिना अत्र निशाशब्दस्य निश्-भावे सति तृतीयैकवचनम्—याम् यच्छब्दः, अयाम अगच्छाम, धिया बुद्ध्या, अस्वात्यायामया—अस्वात्यायः प्राणपीडां प्राप्तः आमयो मदनज्वरो यस्याः सा, मथितैव हतैव, सा हृदयं गता वल्लभा। अस्यार्थः—यामिमां धिया अयाम सा यामत्रयाधीनायामया निशा अस्वात्यायामया सती मथितैव; ततो वयमपि मरणं याम। अत्र चतुर्षु पादेषु एकरूपावृत्त्या अव्यपेतव्यपेतम् ॥

**इति पादादियमकविकल्पस्येदृशी गतिः ।**
**एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ ३७॥**

*A.* इतीति । अव्यपेते व्यपेते च पादादियमकभेदा दर्शिताः । एवं मध्ययमकान्तयमकादिमध्ययमकादयः ॥

**न प्रपञ्चभयाद्भेदाः कार्त्स्न्येनाख्यातुमीहिताः[1] ।**
**दुष्कराभिमता ये तु[2] वर्ण्यन्ते तेऽत्र[3] केचन ॥३८॥**

*A.* नेति । ते सर्वे प्रपञ्चभयात् न कार्त्स्न्येन अभिधीयन्ते, दुष्कराभिमता एव केचन वर्ण्यन्ते ॥

**स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।**
**अमायतेयतेऽप्यभूत् सुखाय तेऽयते क्षयम् ॥३९॥**

*A.* अव्यपेतव्यपेते सर्वपादमध्ययमकं दर्शयति—स्थिरेति। स्थिरा निश्चला आयतिः प्रभावो यस्य सः सम्बोध्यते, यतेन्द्रियो जितेन्द्रियः भवान् यतेः योगिनो न हीयते । तव अमायता सत्यव्यवहारितापि, क्षयम् अयते अप्राप्नुवते, इयते सुखाय अभूत् ॥

---

१. 'ईप्सिताः' इति पा० । २. 'एव' इति पा० । ३. 'तत्र' इति पा० ।

सभासु राजन्नसुराहतैर्मुखै-

महीसुराणां वसुराजितैः स्तुताः ।

न भासुरा यान्ति सुरान्न ते गुणाः

प्रजासु रागात्मसु राशितां गताः ॥ ४० ॥

*A*. सर्वपादमध्ययमकमेव व्यपेतमेकरूपं दर्शयति—सभास्विति । राजन् वसुराजितैः भवद्दत्तवसुहर्षितैः असुराहतैः मद्यपानेन अनुपहतैः विशिष्टैरिति यावत् , महीसुराणां द्विजानां मुखैः सभासु गोष्ठीषु स्तुताः, भासुराः उज्ज्वलाः, रागात्मसु अनुरागमयीषु, प्रजासु राशितां गताः पुञ्जीभूताः तव गुणाः सुरान् न न यान्ति, स्वर्लोकेऽपि प्रथन्ते ॥

तव प्रियासच्चरिताप्रमत्त या

विभूषणं धार्यमिहांशुमत् तया ।

रतोत्सवामोद[1]विशेषमत्तया

प्रयोजनं नास्ति हि कान्तिमत्तया ॥४१॥

*A*. पादान्तयमकमेकरूपं दर्शयति—तवेति । हे असच्चरिता-

---

१. ' आनन्द ' इति पा० ।

प्रमत्त असतां चरितेषु अवहित; तव प्रिया या रतोत्सवामोदाविशेष-मत्ता तया इदम् अंशुमत् उज्ज्वलं भूषणं धार्यं, कान्तिमत्तया न मे किञ्चिदस्ति फलम्, इति सापराधम् आभरणदानेन अनुनयन्तं कान्तं वल्लभा अधिक्षिपति ॥

**भवादृशा नाथ न जानते नते**

**रसं विरुद्धे खलु सन्नतेनते ।**

**य एव दीनाः शिरसा नतेन ते**

**चरन्त्वलं दैन्यरसेन तेन ते ॥ ४२ ॥**

*A.* पादान्तेष्वव्यपेतव्यपेतमुदाहरति–भवादृशा इति। नाथ हे स्वामिन् इति वल्लभोपालम्भः, भवादृशाः नतेः प्रणतेः, रसमनु-भवितुं न जानते । सन्नतं सन्नतिः, इनता स्वामिता, चेति द्वन्द्वसमासः; ते द्वे अपि विरुद्धे परस्परविरुद्धे खलु । ये दीनाः कृपणाः त एव नतेन शिरसा चरन्तु कामम् । तेन दैन्यरसेन, ते तव, अलं निषेधे । सापराधं पादप्रणामकारिणं कान्तं काचि-दुपालभते ॥

**लीलास्मितेन शुचिना मृदुनोदितेन**

व्यालोकितेन लघुना गुरुणा गतेन ।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन॥४३॥

*A.* पादमध्यान्तेषु व्यपेतमेकरूपमुदाहरति—लीलेति । मृदुना उदितेन भाषितेन । स्पष्टमन्यत् ॥

श्रीमानमानमरवर्त्मसमानमान-
मात्मानमानतजगत्प्रथमानमानम् ।
भूमानमानमत यः स्थितिमानमान-
नामानमानमतमप्रतिमानमानम् ॥ ४४ ॥

*A.* पादमध्यान्तेषु अव्यपेतव्यपेतमुदाहरति— श्रीति । श्रीमान्, अमान्, अमरवर्त्मसमानमानम्, आत्मानम्, आनतजगत्प्रथमानमानं, भूमानम्, आनमत, यः, स्थितिमान्, अमाननामानम्, आनमतम्, अप्रतिमानमानम् । श्रीमान् लक्ष्मीपतिः, अमान् अमितः, अमरवर्त्मसमानमानम् आकाशसदृशप्रमाणम्, आत्मानं परमात्मानम्, आनतजगत्प्रथमानमानम् आनतेषु जगत्सु प्रथमानो मानो बहुमानो यस्य तं,

भूमानं भुवो मातारम्, आनमत प्रणमत, यः यच्छब्दः, स्थितिमान् जगतः स्थितिकर्ता, अमाननामानम् अमितनामधेयम्, आनमतम्—अन प्राणने इत्यस्मात् आङ्पूर्वात् कर्तरि पचाद्यचि आनाः प्राणिनः—तेषां मतं पूजितम्, अप्रतिमानमानम् अनुपमाहङ्कारम्। आत्मानम् आनमत इति सम्बन्धः ॥

**सारयन्तमुरसा रमयन्ती**

**सारभूतमुरुसारधरा तम्।**

**सारवानुकृतसारसकाञ्ची**

**सा रसायनमसारमवैति ॥ ४५ ॥**

*A*. व्यपेतमादिमध्यमुदाहरति—सारयन्तमिति। उरुसारधरा विपुलसौन्दर्यधरा, सारवानुकृतसारसकाञ्ची—सारवा सनादा, अत एव अनुकृतसारसपाक्षिशब्दा काञ्ची यस्याः—सा, सारभूतं सुन्दरम्, उरसा सारयन्तं गाढम् आलिङ्गन्तमित्यर्थः, वल्लभं रमयन्ती काचित् रसायनम् असारम् अवैति ॥

**नयानयालोचनयानया [1]कृती-**

**नयानयान्धान्विनयानयायते।**

---

१. 'नया-' इति पा०।

न यानयासीर्जिनयानयान्नरा[1]-
नयानयांस्तान् जनयानयाश्रितान् ॥ ४६ ॥

*A*. पादादिमध्येषु अव्यपेतव्यपेतं दर्शयति—नयेति। कश्चिद्राजानमविनीतान् शिक्षयेति प्रार्थयते। नयानयालोचनया, अनया, कृतीन्, अयानयान्धान्, विनयानयायते, न, यान्, अयासीः, जिनयानयान्, नरान्, अयानयान्, तान्, जनय, आनय, आश्रितान्। नयानयालोचनया न्यायान्यायपर्यालोचनया, अनया एतया, कृतीन् कुशलान्, अयानयान्धान्—अयः पुण्यम्, अनयः अपुण्यम्—तयोः अन्धान् अज्ञान्, विनयानयायते—विनयेन सदाचारेण आनया आनीयमाना आयतिः समृद्धिः यस्य तस्य सम्बोधनं, न—निषेधे, यान्—यच्छब्दः, अयासीः अगच्छः, जिनयानयान्—जिनः बुद्धः तस्य यानं सिद्धान्तः—तेन यान् गामिनः नरान्, अयानयान् अमार्गान् गतान्, जनय कुरु, आनय जीवय, आश्रितान्। विनयानयायते कृतीन् अनया क्रियमाणया नयानयालोचनया यान् न अयासीः अयानयान्धान् अयानयान् तान् जिनयानयान् जनय—अहिंसापरान् कुरु इत्यर्थः; आश्रितान् आनय जीवय ॥

रवेण भौमो ध्वजवर्तिवीरवे-
रवेजि संयत्यतुलास्त्रगौरवे।

---

१. 'नया-'इति पा०।

**रवेरिवोग्रस्य पुरो हरेरवे-**
**रवेत तुल्यं रिपुमस्य भैरवे ॥ ४७ ॥**

*A.* आद्यन्तयोः एकरूपं व्यपेतं दर्शयति—रवेणेति। अतुलास्त्रगौरवे भैरवे संयति, ध्वजवर्तिवीरवेः—ध्वजे वर्तमानः वीरो विः गरुडो यस्य तस्य—हरेः कृष्णस्य रवेण सिंहनादेन भौमः नरकः अवेजि उद्वेजितः त्रासितः ; रवेः इव उग्रस्य प्रतापिनः अस्य हरेः पुरः रिपुम् अवेः तुल्यं मेषतुल्यम् अवेत। अस्य हरेः पुरः रिपुं सिंहस्य पुरो मेषमिव बुध्यध्वम् इत्यर्थः ॥

**मयामया[1]लङ्घ्यकलामयामया-**
**मयामयातव्यविरामयामया ।**
**मयामयार्ति निशयामयामया-**
**मयामयामूं करुणामयामया ॥ ४८ ॥**

*A.* पादाद्यन्तेषु अव्यपेतव्यपेतं दर्शयति—मयेति। मयामयालङ्घ्यकलामयामयाम्, अयाम्, अयातव्याविरामयामया, मया, अमयार्तिं, निशया, आमयाम्, अयाम्, अय, आमय, अमूं, करुणामय, आमया। मयामयालङ्घ्यकलामयामयाम्—मयः

१. 'लम्ब्य' इति पा० ।

क्षयः, स एव आमयः व्याधिः, तेन अलङ्घ्यः अप्राप्यः, कलामयः चन्द्रः, तेन आमं खेदं यातीति आमयाः—तां, पूर्वचन्द्रजनितखेदामिति यावत्; अयाम्—अयः पुण्यं, तद्वतीम्, अर्शआदित्वादच्; अयातव्यविरामयामया—अयातव्यविरामः अप्राप्यावासानः, यामः प्रहरः, यस्याः तया; मया स्वेन; अमयार्तिं अक्षयपीडां; निशया राज्या; आम आगच्छ—अम गत्यादिषु, तस्मात् आङ्पूर्वात् लोण्मध्यमपुरुषैकवचनम्; यां यच्छब्दः; अयासिषम्; अय अभिमतदैव; आमय आगमय, संयोजय इति यावत्; अमूम् एताम्; करुणामय कृपासागर; आमया—आमः खेदः, तं याता, यातेः विचि तृतीयैकवचनम्। अयमर्थः—करुणामय अय, आम मे सन्निधत्स्व, मयामयालङ्घ्यकलामयाम् अयाम् अमयार्तिम् अमूं हृदयस्थितां दयिताम् मया आमय, अयातव्यविरामयामया अनया निशया याम् अयाम् ॥

मतान्धुनानारमतामकामता-
मतापलब्धाग्रिमतानुलोमता।
मतावयत्युत्तमताविलोमता-
मताम्यतस्ते समता न वामता ॥ ४९ ॥

*A.* आदिमध्यान्तेरषु एकरूपं व्यपेतं दर्शयति—मतामिति। मतां, धुनाना, आरमताम्, अकामताम्, अतापलब्धाग्रिमता-

नुलोमता, मतौ, अयति, उत्तमताविलोमताम्, अताम्यतः, ते, समता, न, वामता। मताम् इष्टाम्; धुनाना क्षिपन्ती; आरमतां विषयेभ्यो विरमतां योगिनाम्; अतापलब्धाग्रिमतानुलोमता—अतापेन अक्लेशेन लब्धा प्राप्ता, अग्रिमतायाः श्रैष्ठयस्य अनुलोमता आनुकूल्यं, यया सा; मतौ बुद्धौ; अयति गच्छति; उत्तमताविलोमतां श्रैष्ठयस्य प्रातिकूल्यम्; अताम्यतः अकाङ्क्षतः, तमु काङ्क्षायाम्; ते तव; समता सर्वभूतमैत्री; न प्रतिषेधे; वामता क्वचित् प्रतिकूलता। अयमर्थः—आरमताम् अकामतां धुनाना वामता, उत्तमताविलोमताम् अताम्यतः ते, मतौ न; अतापलब्धाग्रिमतानुलोमता समतैव भवति। इति मुमुक्षुं कश्चित् प्रशंसति॥

**कालकालगलकालकालमुखकालकाल**
**कालकालपनकालकालघनकालकाल।**
**कालकालसितकालकाललनिकालकाल**
**कालकालगतु कालकालकलिकालकाल॥५०॥**

*A*. चतुर्षु पादेषु आदिमध्यान्तयमकम् अव्यपेतव्यपेतं दर्शयति—कालकालेति। प्रियाविरहितः कश्चित् अत्र घनकालं प्रार्थयते। कालकालगलकाल—कालकालः ईश्वरः, तस्य गलवत् काल; कालमुखकालकाल—मृत्युमुखे कालः क्षेपणं, तत्करोती-

ति कालः, कर्मण्यण्, रलयोरभेदः, विरहिणां पीडाकर इति यावत्; कालकालपनकालकाल—कृष्णं शिरो येषां ते कालकाः मयूराः, तेषाम् आलपनस्य कालः कारः करणं, तस्य काल समय; घनकाल वर्षाकाल; कालकालक—कालकं चेतः, तत् आलातीति आदत्ते इति आङ्पूर्वात् ला दाने इत्यस्मात् कप्रत्ययः, मनोहरेति यावत्; यद्वा कालकालसितकालका—का ईषत्, अलकैः आ समन्तात् लसितं शोभितं, कालं कृष्णं, कं मूर्धा, यस्याः सा; ललनिका प्रशस्तललना, प्रशंसायां कः; अलकालकालक—अलका नगरी, ताम् अलङ्करोतीति अलकालकः वैश्रवणः, तद्वत् अलक समर्थ, सामर्थ्यवाचिनः अलंशब्दात् णिचि ण्वुल्; आलगतु आश्लिष्यतु; कालकाल—काः शब्दः, कै गै शब्दे, भावे क्विप्, कां रातीति कारः कालः, कं जलम् आलातीति कालः मेघः, कारः कालः यस्मिन् तस्य सम्बोधनम्; कलिकालकाल—कलेः कलहस्य कालं क्षेपं करोतीति, प्रणयकलहशान्तिकरेति यावत्। एवम्भूतघनकाल कालकालसितकालका ललनिका माम् आलगतु—इत्यन्वयः ॥

**सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयोः ।**
**उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र[1] कीर्त्यते॥५१॥**

---

१. 'अद्य' इति पा० ।

*A.* कश्चित् पादाद्यन्तयमकभेदं सन्दष्टयमकं नाम दर्शयति—सन्दष्टेति। उक्तान्तर्गतं—मायामयेत्यादौ सन्दष्टयमकत्वमप्यस्ति आद्यन्तयमकत्वमप्यस्ति; अत्र तु सन्दष्टयमकत्वमेव ॥

**उपोढरागाप्यबला मदेन सा**
**मदेनसा मन्युरसेन योजिता ।**
**न योजितात्मानमनङ्गतापिता-**
**ङ्गतापि तापाय ममास नेयते ॥ ५२ ॥**

*A.* तदुदाहरति—उपोढेति। उपोढरागा, अपि, अबला, मदेन, सा, मदेनसा, मन्युरसेन, योजिता, न, योजिता, आत्मानम्, अनङ्गतापितां, गता, अपि, तापाय, मम, आस, नेयते। मदेन क्षीबतया, उपोढरागापि धृतरत्यभिलाषापि, मदेनसा मदपराधेन गोत्रस्खलनरूपेण प्रयोजकेन, मन्युरसेन योजिता, पश्चात् अनङ्गतापितां स्मरसञ्ज्वरवत्तां, गतापि, आत्मानं न योजिता न योजितवती शरीरं मयि नार्पितवती, सा मम नेयते अनियते अपरिमिताय, तापाय आस बभूव ॥

**अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।**
**पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥**
**५३ ॥**

*A*. एवम् आदिमध्यन्तयमकादीनि प्रदर्श्य अर्धाभ्यासं पादाभ्यासं च प्रदर्शयितुमुपक्रमते—अर्धेति । अर्धाभ्यासः पादद्वयाभ्यासः ॥

**ना स्थेयस्सत्त्वया वर्ज्यः परमायतमानया ।**
**नास्थेयस्स त्वयावर्ज्यः परमायतमानया ॥ ५४ ॥**

*A*. प्रथमतृतीययोः द्वितीयचतुर्तयोश्च पादयोः व्यपेताभ्यासं दर्शयति—नेति । ना, स्थेयस्सत्त्वया, वर्ज्यः, परमायतमानया, न, आस्थेयः, सः, त्वया, आवर्ज्यः, परम्, आयतमानया । ना पुरुषः ; स्थेयस्सत्त्वया स्थिरतराचित्तया ; वर्ज्यः परित्याज्य ; परमश्च आयतश्च मानः प्रणयकलहः यस्याः तया ; नेति प्रतिषेधे; आस्थेयः विश्वास्यो बहुगुणः ; सः त्वया ; आवर्ज्यः अङ्गीकार्यः; परं भृशम्; आयतमानया प्रयत्नं कुर्वत्या । सापराधेन दयितेन वशीकृता सखी नायिकां प्रति आह—स ना स्थेयस्सत्त्वया परमायतमानया त्वया न वर्ज्यः; आस्थेयः परम् आयतमानया अवर्ज्यः—इति ॥

**नरा जिता माननयासमेत्य**
**न राजिता माननया समेत्य ।**
**विनाशिता वैभवतापनेन**
**विनाशिता वै भवतापनेन ॥ ५५ ॥**

*A*. प्रथमद्वितीययोः तृतीयचतुर्थयोश्च अव्यवहितम् अर्धाभ्यासं दर्शयति—नरा इति। नराः, जिताः, माननयासम्, एत्य, न, राजिताः, माननया, सम, इत्य, विनाशिताः, वैभवतापनेन, विना, आशिताः, वै, भवता, अपनेन। अयमर्थः—सम सश्रीक, माननया इत्य मान्य, राजन्, त्वया जिताः, नराः, माननयासं मानस्य नयस्य च असं क्षेपम्, एत्य प्राप्य, न राजिताः नोज्ज्वलाः—पराजिताः बभूवुः; वैभवतापनेन—वैभवेन प्रभुत्वेन परेषां तापनेन, अपनेन अकुटिलेन—पन कौटिल्ये इत्यस्मात् पचाद्यच्, भवता विनाशिताः हताः, वै अतः, विना पक्षिणा गृध्रादिना, आशिताः भक्षिताः॥

**कलापिनां चारुतयोपयान्ति**
**वृन्दानि लापोढघनागमानाम्।**
**वृन्दानिलापोढघनागमानां**
**कलापिनां चारुतयोऽपयान्ति॥ ५६॥**

*A*. प्रथमचतुर्थयोः द्वितीयतृतीययोश्च पादयोः व्यवहितम् अव्यवहितञ्च अर्धाभ्यासं दर्शयति—कलापिनामिति। कलापिनां, चारुतया, उपयान्ति, वृन्दानि, लापोढघनागमानां, वृन्दानिलापोढघनागमानां, कलापिनां, च, आरुतयः, अपया-

न्ति । लापः शब्दः, तेन ऊढः सूचितः, घनागमः वर्षागमः, यैः तेषां कलापिनां मयूराणां, बृन्दानि चारुतया उपयान्ति; बृन्दानिलापोढघनागमानां—बृन्दानिलः पुञ्जीभूतः वायुः प्रचण्ड इति यावत्, तेन अपोढः निराकृतः, घनः गाढः, आगमः सञ्चारः, येषां तेषाम्; कं जलं, तस्मिन् लपनशीलाः कलापिनः हंसाः, तेषां च; आरुतयः शब्दाः अपयान्ति । इति अर्धाभ्यासाः त्रयो दर्शिताः ॥

**नमन् दयावर्जितमानसात्मया**
**न मन्दयावर्जितमानसात्मया ।**
**उरस्युपास्तीर्णपयोधरद्वयं**
**मया समालिङ्ग्यत जीवितेश्वरः ॥ ५७ ॥**

*A.* पादाभ्यासाः षट्—प्रथमद्वितीयपादयोः प्रथमतृतीयपादयोः प्रथमचतुर्थपादयोः द्वितीयतृतीयपादयोः द्वितीयचतुर्थपादयोः तृतीयचतुर्थपादयोश्चेति । तत्र प्रथमद्वितीययोः अव्यवहितं पादयमकं दर्शयति — नमन्निति । नमन्, दयावर्जितमानसात्मया, न, मन्दया, आवर्जितमानसात्मया । सापराधं पादप्रणतं प्रियतमम् अवधूय सानुशयायाः नायिकायाः

वचनम् । नमन् पादयोः पतन्, दयावर्जितमानसात्मया दयावर्जितमनस्स्वरूपया, नेति प्रतिषेधे, मन्दया अज्ञया, आवर्जितमानसात्मया—आवर्जितम् अङ्गीकृतम्, मानस्य प्रणयकलहस्य, सात्मम् आनुकूल्यं, यया—तया। नमन् जीवितेश्वरः दयावर्जितमानसात्मया आवर्जितमानसात्मया मन्दया मया उरसि उपास्तीर्णपयोधरद्वयं न समालिङ्ग्यत ॥

सभा सुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्मलैः ।
स भासुराणामबला विभूषिता
विहारयन् निर्विश सम्पदः पुराम् ॥ ५८ ॥

*A*. प्रथमतृतीययोः व्यवहितं पादयमकं दर्शयति—सभेति। सभा, सुराणाम्, अबला, विभूषिता; सः, भासुराणाम्, अबलाः, विभूषिताः। राजन्, अबला बलासुररहिता, विभूषिता—विभुना इन्द्रेण उषिता अध्यासिता, सुराणां सभा, मृणालनिर्मलैः तव गुणैः आरोहि व्याप्ता; त्वाम् इन्द्रोऽपि सदसि प्रशंसति इत्यर्थः; स त्वम् इह, विभूषिताः अलङ्कृताः अबलाः तरुणीः विहारयन् रमयन्, भासुराणाम् उज्ज्वलानां पुरां सम्पदः निर्विश अनुभव ॥

कलङ्कमुक्तं तनुमध्यनामिका
 स्तनद्वयी च त्वदृते न हन्त्यतः ।
न याति भूतं गणने भवन्मुखे
 कलङ्कमुक्तं तनुमध्यनामिका ॥ ५९ ॥

*A*. प्रथमचतुर्थयोः व्यवहितं पादाभ्यासं दर्शयति—कलमिति । अत्र कश्चित् जितेन्द्रियं स्तौति । कलं, कम्, उक्तं, तनुमध्यनामिका; कलङ्कमुक्तं, तनुमत्, हि, अनामिका । कलं मधुरं, कं किंशब्दः, उक्तं वचनं, तनुमध्यनामिका—तनोः कृशस्य मध्यस्य अवलग्नस्य नामिका नमयित्री; कलङ्कमुक्तं कलङ्करहितम्—जितेन्द्रियम् इति यावत्, तनुमत् शरीरि, हि यस्मात्, अनामिका उपकनिष्ठाङ्गुलिः । स्त्रीणाम् इत्यध्याहार्यम् । स्त्रीणां कलम् उक्तं तनुमध्यनामिका स्तनद्वयी च त्वाम् ऋते कं न हन्ति? सर्वान् बाधते हि यतः, अतः भवन्मुखे गणने प्रस्तुते सति कलङ्कमुक्तं तनुमत् भूतम् अनामिका न याति । त्वयि प्रथमं कनिष्ठाङ्गुल्या गणिते द्वितीयाङ्गुलिः त्वत्सदृशं गणयितुं न लभते इति भावः ॥

यशश्च ते दिक्षु रजश्च सैनिका
 वितन्वतेऽजोपम दंशिता युधा ।

